श्रीधर्मदत्त वैद्य
भूतपूर्व स्वायत्त-शासन-मंत्री (उ०प्र०)

धन्वन्तरि-मार्ग, बरेली
दिनांक २ अक्टूबर, १९७५

## ※ शुभ कामना ※

'नेहरू यशः सौरभम्' देखने का अवसर मिला। समग्र काव्य संस्कृत भाषा का महाकाव्य है जिसमें सरस प्रवाह पूर्ण पद्यों के द्वारा राष्ट्रनायक श्री जवाहरलाल नेहरू के चरित्र का वर्णन किया गया है। काव्य में भारतीय मुक्ति-संग्राम, राष्ट्र का स्वाधीनतापर्व, चीनी आक्रमण से भारतीय क्षोभ, बंगला देश की स्वाधीनता, प्रारम्भिक सर्गों में भारत-मातृभूमि वन्दना, काश्मीर वर्णन, श्री जवाहरलाल नेहरू का जीवन, श्री मोतीलाल नेहरू तथा कमला नेहरू जी सम्बन्धी प्रकरण बड़े ही मार्मिक हैं। अन्तिम सर्ग में श्रीमती इन्दिरा गांधी के उदात्त चरित्र का वर्णन प्रभावशाली ढंग से उल्लेखनीय है। संस्कृत-साहित्य के लिए यह काव्य एक अच्छी उपलब्धि है। लेखक का प्रयास सराहनीय है जिसके लिए वह बधाई के पात्र हैं।

धर्मदत्त वैद्य

# समर्पणम्

भारत - प्रशासने प्रधानमन्त्रि-पद - विभूषिताया

सकल-गुणशील-कला-कलाप-लसितमानसाया

दलितविश्वजनदास्यदुर्दिनतामसाया

नेहरू-कुलकैरवेन्दु-चन्द्रिकाया

गांध्युपाधि - चर्चिताया

प्रियदर्शिनीन्दिराख्याः

कर - कमलेषु

समर्पितम्

यद्वशः प्रतिभाप्रभाभिरनिशं, दिक्कालमालोकयन्,
लोके लब्धयशाः शशाङ्कसमतामायात्यपूर्वोदय. ।
तस्योद्दीप्तकलेन्दिराख्य-भुवन-श्री संजयन्त्या इद
काव्यं राष्ट्रकथा-कलाप-लसितं स्यादर्पितं श्रेयसे ॥१॥

सूत्राणामेव विज्ञत्या, चानुशासनपर्वणा।
निर्ममो भारतं भव्य मतिध्यासेन्दिरा जयेत् ॥२॥

भारत - प्रशासने प्रधानमन्त्रि-पद - विभूषिताया
सकल-गुणशील-कला-कलाप-ललितमानसाया
दलितविश्वजनदास्यदुर्दिनतामसाया
नेहरू-कुलकैरवेन्दु-चन्द्रिकाया



गाँध्युपाधि-चर्चिताया
प्रियदर्शिनीन्दिराया
कर-कमलेषु समर्पितम्

राजभवन चण्डीगढ़ में आयोजित समारोह में
**महामहिम श्री बी० एन० चक्रवर्ती**
राज्यपाल हरियाणा के
करकमलों द्वारा



नहुष यश 'सौरभम्' के लिए प्रदत्त गीता पुरस्कार
प्राप्त करते हुए लेखक

समर्चितानां पितृजनानां महादेवी गोविन्द महाभागानां
गुरुजनानां चरणकमलेषु समर्पितम्

# काव्यपुष्पम्

या मामाशीर्वचनसरसं, शैशवे स्नेहसिक्तं
वात्सल्येन द्रवितहृदया चुम्बनैः पोषयन्ती ।
स्पष्ट्वा दैव प्रहृतमवश जीवन साभिलाष
याता स्वर्गं विनतशिरसो मेऽञ्जलिस्तज्जनन्यै ॥

बाल्ये वियुक्तमपि दैववशाज्जनन्या
स्वस्नेहदानदयित परिपालयन् य ।
मामन्वशात् सुचरितानि सता, कृतिर्मे
गोविन्दपूज्यजनकाय समर्पिता स्यात् ॥

सान्निध्यमाप्य नितरां चरणाम्बुजानां
यस्याशिषैव परिमार्जितशेमुषीक ।
चाराध्य सुरगिर गुरवेऽपि तस्मै
श्रद्धा - प्रसूनमिदमर्पितमस्तु भूय ।

# नेहरूयशःसौरभस्य विषयानुक्रमणिका

# विनिवेदनम्

अयमतीव हर्षस्य सौभाग्यस्य च विषयो यदिदं 'नेहरूयश:सौरभम्' गीर्वाणवाणी-वाङ्मय वाटिकायां नव्य पुष्पसौरभं सहृदयानां मनांसि मादयत् विराजतेतराम् ।

'चक्रव्यूह'-काव्यरचनानन्तरं यदल्पकालेन विदुषां करकमलेषु नव्य द्वितीयमिदं महाकाव्यमागतं तच्छ्रद्धा - सम्भार-भूषितानां विपश्चितां स्नेह - सम्बलालोकित - प्रतिभा - पथमनुसरतैव मयाऽधिगतमेतन्नात्र किञ्चिदपि सन्देह कारणं वर्तते ।

संस्कृत-साहित्यं यद्यपि राष्ट्रस्य भारतस्य संस्कृतेराधारभूतं, तथापि यादृशी स्वाधीनदेशेऽस्यापेक्षासीदुन्नते प्रसारस्य प्रचारस्य वा न जाता तादृशी । दुर्भाग्यात् प्राचीनं प्रति बद्धानुरागा विद्वांसो नव्यं न परिचिन्वन्ति, नव्यानुरागिणः प्रोत्साहनविरहात् युगसाहित्य -निर्माणे उदासीनाः । कथञ्चिज्जायमाना रचना कन्यकेव भारभूता जनकमेव बाधते । निष्ठुरव्यवसायिनः प्रकाशका, पल्लवग्राहिसाहित्यानुरागिणः पाठकाः, असंस्कृतज्ञो लोकः, शिथिलं प्रशासनस्य संस्कृतप्रसारतन्त्रम् । अभावेन निष्फलीकृतं कवेः प्रजापतित्वं काव्यसंसारे ।

कृतिद्वयी जनिता । 'कन्यापितृत्वं खलु नाम कष्ट'मप्यनुभूतं मया । प्रथमा 'चक्रव्यूह' नामिका कृतिर्गतवर्षे कथमपि प्रकाशिता । द्वितीयापि कथञ्चिद् भवतां करकमल - भूषिता वर्तते । अहं सम्प्रति भारमुक्तोऽपि चिन्तितोऽस्म्यस्या भविष्य-विषये ।

अस्य काव्यस्य वैशिष्ट्यं प्रति न किञ्चिन्मया वक्तव्यं यतो नहि 'कस्तूरिकामोदः शपथेन विभाव्यते ।' पाठकाः स्वयमेव कुशलसमीक्षकाः ।

इदं काव्यमपि पूर्वकाव्यवद् हरियाणाराज्यशासनायोजिताखिल-भारतीय प्रतियोगितायां निर्णायकैः प्रथमं पुरस्कृतम् ।

काव्यमेतत् विद्वद्भिः डा० रमेशचन्द्रशुक्ल - महाभागैः विस्तृत-भूमिकया विभूषितम् । बरेली कालेजस्य संस्कृत-विभागाध्यक्षैराचार्यं श्रीलक्ष्मीचन्द्रकौशिक महोदयैः संशोधनेन परिष्कृतम्, तथैव श्री डा० कृष्णकान्त शुक्लैः, परिष्ठसंस्कृताध्यापकैश्च मुद्रण-साहाय्यैः समलङ्कृतम् । एषां महाभागानां परमानुग्रह भारावनतोऽहमाभार प्रदर्शयामि स्मरामि च मुहुरेषामुपकृति-स्नेहम् ।

ग्राम्य - विकास - सेवा - समर्पितत्वात् नितरां देववाणीवाङ्मयमभ्युप-रतस्य मे कथञ्चिदयं काव्यकुसुमाञ्जलिः भवतु भगवती वीणापाणि-पादार्पित इति तु आशासे ।

विदुषामनुचर,

भोजीपुरा (बरेली) — गोस्वामि बलभद्रप्रसाद शास्त्री

विजयादशमी, सं० २०२२ — खण्डविकासाधिकारी



* श्री *

# भूमिका

## पूर्वपीठिका

द्वादशशतवर्षपर्यन्तं परतन्त्र्याऽऽपदमसह्यां सहमानं भारतमस्मदीयं स्वकीयानि दुर्नियतिसमुपस्थापितान्यहान्यतिवाहयति स्म । भगवदनुकम्पया साम्प्रतं देशोऽयमास्माकीनः स्वातन्त्र्यसमीरे सुखेन श्वसिति । स्वतन्त्रताप्राप्तस्यास्याप्यष्टाविंशतिवर्षाण्यतीतानि, परं न संस्कृतं, भरतक्षमायामस्यां यदुद्बभूव ववृधे सर्वत्र च भूभुवने प्रससार यस्मिंश्चाखिलमाध्यात्मिकमाधिभौतिकमाधिदैविकञ्च वाङ्मयं प्रादुरभूत् यच्च सहस्रशो वर्षाणि देशस्यास्य रसनायां सञ्चचार, हन्त ! स्वातन्त्र्येऽप्याप्तेऽपि तत्स्थानमधितिष्ठत् संलक्ष्यते यस्य महनीयस्य महिममयस्यानश्वरस्याधिगमनाय जनुः सिद्धं स्वकीयं स्वत्वं निदधाति तत् । संस्कृतविद्यालयानां संस्कृतग्रन्थानाञ्चेदानीमपि प्रेक्ष्योपेक्षणमेतत् को न भारतभक्तिभाग् विषीदति । स्वपरिपन्थिपरिस्थितीनामुपस्थितत्वात् संस्कृतसुधीमसारस्य प्रतिमा क्रन्दन्ती, सद्योजाता पुस्तक - शावकाः रुदन्तश्च पर्यवलोक्यन्ते, संस्कृतरचनानां प्रकाशनं दुष्करकार्यमेव जातमस्ति । स्वदेश एव संस्कृत-लेखकाः संस्कृतज्ञाश्च परकीया इव मता भवन्ति । एतादृश्यां सत्यामपि विपर्यस्तायामवस्थायां शतशो हि प्रेक्षावन्तोऽनुदिवसं संस्कृत-मातृचरणयोः नैजरचनापुष्पाञ्जलिं समर्पयन्तो दरीदृश्यन्ते । वर्तमानेऽनेहसि पण्डिता क्षमाराव, श्री मेधाव्रत-चारुदेव-रामशरण रामस्वरूप-रेवाप्रसाद - रामोपाध्याय-ब्रह्मानन्दशुक्लादि विद्वत्स्वेतेषु राजमानेषु राजते श्रीमद्गोस्वामि बलभद्रप्रसाद शास्त्री च । सुरगव्यां रचनां विरचयतस्तस्य यद्यप्यल्पीयानेवानेहा सञ्जातोऽस्ति

गभीरनाभिस्त्रिवलीभिरन्विता,
विभाति यस्या ननु सङ्गमस्थली
यदीयगङ्गा - यमुना - सरस्वती-
पय पवित्रीकुरुते जगत्त्रयम् ॥ (१।६)

हिमालयो भाति विशालभालवत्
वनानि पुष्पोपचितानि कुन्तला ।
तुषारकान्तद्युतिरत्नभास्वर
विभाति काश्मीर किरीटमुज्ज्वलम् ॥ (१।८)

कवे भारतवसुन्धरायां सैव धीः सशोभते या वत्सस्य स्वमातरि विराजते । अत स (कवि) मातृभक्तिभावभरनिर्भरोल्लासामन्दान्दोलित मना भवन् सहर्ष गायति—

समेहशी सा जननीव वत्सला-
भिनन्दिता भारतमातृभूरियम् ।
जयत्यमन्दं शरदिन्दुचन्द्रिका-
विलासहासैरिव सिञ्चती भुवम् ॥ (१।११)

काश्मीर-वर्णने कवेरद्भुतैव चातुरी वीक्ष्यते । तत्र न केवल काश्मीरस्य दिव्य सौन्दर्यमपितु तत्रत्याया कलिताया कलायाश्च सुषमा लोचनगोचरता प्रपद्यते—

सुरेन्द्रशापाद् धरणीमिवागतं
प्रखण्डमाखण्डललोकसम्पदाम्
विलोक्य काश्मीरमनन्तवैभव
न कामयन्ते सुजनास्त्रिविष्टपम् ॥ (१।१७)

हिमाद्रिशृङ्गैः रमणीयनिर्झरैः
सुपुष्पितैः पल्लवितैर्महीरुहैः ।
सरोवरैस्तैरिव दिव्यदर्पणै-
र्दिवं हसन्ती विहगैरुपत्यका ॥ (१।१९)

इत्येतदादिकं कृतमधीयानस्य शृण्वतो वा जनस्य पुरः सर्वमपि वर्णितं दृश्यं समुपस्थितं सञ्जायते ।

काश्मीरवनकुञ्जेषु सर्वेऽपि ऋतवः सततं वसन्ति—

वसन्तवर्षाशरदादयः स्वयं विहाय दोषानिह सौम्यचारिणः ।
सदा रमन्ते वनकुञ्जपर्वतेऽवमन्दमानन्दरसप्रवाहिणः ॥ (१।२१)

काव्ये मधुपानादिवर्णनमपि काव्यलक्षणकारिणामिष्टम् । काव्यमिदं तेषां तमप्यभिलाषं समाजयति—

सरोवरान्तस्तरणीगृहस्थितैस्तरङ्गसञ्चारविकम्पितस्वरैः ।
प्रियाङ्गसङ्गासवपानमन्थरं प्रणीयते वै मधुयामिनीजनैः ॥
(१।२४)

रमणीनां रमणीयतायाः वर्णनेऽपि कवेरस्य मनो भृशं रमते । तदीयैतद्विधां रुचिं सर्वथैव मानवस्य स्वाभाविकीमभिरुचिमनुसरति । काव्यन्तु वस्तुनो भवति मानवस्य रूपान्तरमेव अथवा शब्दार्थमयं रूपम् । अतः कथमिदं सम्भवं यत् काव्यं मानवं विसंवदेत् । अस्ति तन्मानवमानसस्य प्रतिबिम्बभूतम् । एतस्मादेव कारणात् तत्र ते सर्वेऽपि भावाः परिस्पन्दन्ते ये मानवमानसाम्बरे उत्पतन्तो वीक्ष्यन्ते ।

स्वदेहलावण्यतिरस्कृतश्रिय-
श्चरन्ति नार्यो रमणीयदर्शनाः
यदङ्गभाक्रान्तविभूषणप्रभा
विभाति चन्द्राङ्कितलक्ष्मसन्निभा ॥ (१।२६)

अस्ति काश्मीरवसुमती तु चिराद् आगमकोविदानां जन्मभूमिः । कश्चित्तेषां पुण्येन दर्शनेनानुगृह्णाति न —

विभिन्नधर्माचरणप्रचारिणो
वसन्ति यत्रागमकोविदा नराः ।
न केवलं जीवनमात्रदर्शनं
विदन्ति ये जीवनदर्शनं सताम् ॥ (१।२८)

कश्चित्तत्रत्यान् मल्लविदो[1] वर्णयन् नैषधीयचरितकारस्य श्रीहर्षस्य स्मारयति इमां पङ्क्तिम्— 'दिगङ्गनाङ्गाभरणं रणाङ्गणे यशःपटं तद्भटचातुरीतुरी'। स्तनन्धयस्वभावरूपादिकं च काव्यमतितरां प्रीणयति —

स्नेहप्लुतं स्तन्यमसौ जनन्या निपीय नित्यं परिपोषिताङ्गः ।
शनैः-शनैः सञ्चितशक्तिरङ्काद् मातुर्ययौ मातृभुवः प्रियाङ्कम् ॥
(२।१७)

सदैव काव्यमेतत् प्रायेण सरसवर्णमेव वैशिष्ट्यं निबध्नत् पर्यवलोक्यते । अन्यानि च अत्र पञ्चषड्वा वस्तुतत्त्वानि समुपस्थाप्यन्ते । कुमारजन्म वर्णयति कविः —

निजोच्चराशौ मिथुने व्यवस्थे
सुरेतर्यंवोच्चगते ध्वजेऽपि ।
स्वदेशदास्यध्नमुहूर्तपाते
कुलावतंसं सुषुवे कुमारम् ॥ (२।१३)

---

१. प्रहित्य देशान् स्वयशः सितरश्मे
गुणैः र्वयन्तीव दिगङ्गनापटम् । (१।३१)

महोत्सवं दर्शयति ॥—

विद्युद्वितानैर्घनतूर्यनादै,
सुगन्धिवातैर्जलसीकरार्द्रैः ।
निशामुखे तत्र महोत्सवोऽसौ
वर्धायमाणोऽम्बुधरैर्विरेजे ॥ (३।२३)

सर्वजनहृदयाह्लादकमन्मथोपमजवाहरलाल वर्णयन्प्रत्यक्षतया
सश्च द्र वर्णयति—

कन्दर्पदर्पघ्नवपुः श्रियासौ किरन् नवस्नेहसुधाप्रसादम् ।
स देहलीलोकपयोधिपूरं प्रवर्धयश्चन्द्र इवाधिरेजे ॥ (३।२२)

प्रादुर्भूते सति जवाहरलाले दासताया अवसानं प्रत्यासीदिदियेतत्
तेन विधिनाऽमनसि कवियेन सूर्योदयस्यापि वर्णनं सम्पद्यते—

अस्तंगतो विधिवशाद् विवशः प्रतीच्यां,
विश्वप्रकाशकर - भारत - भास्करो यः ।
दासत्वमन्धतिमिरं तरसा बिभित्सुः
प्राच्यामसौ पुनरुपाक्रमताभ्युदेतुम् ॥ (२।५०)

शरदमपि अप्रत्यक्षभावेन प्रतिष्ठापयति—

शान्तिप्रभापरिगतो नवराष्ट्रचन्द्रो
विश्वकविरन् जगति शान्तिसुधाप्रकाशम् ।
सौम्ये जवाहरशरत्समये सुपक्षे,
पूर्णत्वमाप सकलाभिरसौ कलाभिः ॥ (१।६०)

विजयं गायति—

विजयेन रणे, न केवलं बंगलादेशं नवोदयोऽभवत् ।
प्रभवत् परितः प्रतिष्ठितं, भुवने भारतवर्षविक्रमम् ॥ (१२।१२)

वर्णनस्य नातिदीर्घत्वादत्यन्तातिलघुत्वात् क्वापि नाध्येता न श्रोता वैरस्यं गच्छति । तस्य सर्वत्रैव ललितभाषाभिर्विविधालङ्कृतत्वात् प्रसादगुणसत्त्वाच्च सहृदय परामेव प्रीतिमुपैति । सर्वत्रैव सरसतायाः स्थितत्वात् सचेतसश्चेतोऽध्ययनाद् विरमयेच्च न, अतः यावत् काव्यस्य तस्य तदध्ययनरङ्गोत्सुक्यमुत्तरोत्तरमेधत एव । सर्गस्यादीर्घत्वात् तदीयमुख्य सम्पटनाभिरर्जितस्य अनुकूलाया एव परिस्थितेरधिगमनाय सदवसरमनुयाति । छन्दसां सर्वथा समीचीनत्वाद् गेयत्वाच्च रसास्वादने तानि अतिसहायकानि जायन्ते । भारतस्य पराधीनतोन्मूलनायोत्थापित पदमनुदिनमुपसृतमेव दृष्ट्वा नायकस्य मनः सतत स्वतन्त्रतावाप्तिपर्यन्त व्यथामयत । अतो मुखादारभ्योपसंहृति यावत् यो हि उपक्रमोऽङ्गीकृतस्तस्य निर्वाह समुचित एव सञ्जातोऽस्ति । प्रतिसर्गं नवनवघटनावतार कविना कृतोऽस्ति सर्गान्ते च छन्दश्च तेन परिवर्तितमेतस्मादपि हेतो काव्यस्य प्रियताऽतिशयोपचय प्रयातोऽस्ति । किं बहुना कुशलेन कविना ते सर्वेऽप्युपाया गृहीता भान्ति ये हि काव्यं लोकरञ्जनकरं कर्तुमभिलष्यन्ते ।

न परतन्त्रतासमं सुखं न स्वतन्त्रतासमं सुखम्— इत्येतद् विचिन्त्य मनस्वी मनीषी स्वतन्त्रतां प्राप्तुं युध्यते । स तदर्थं यदि स्थिताय खिलान्यपि असह्यासह्यतराणि कष्टानि सुखेन सहते । स तज्जीवन जीवनमेव न मन्यते यदस्ति परतन्त्रम् । पारतन्त्र्याज्जीवनोत्सर्ग स वरं मत्वा तल्लाभाय प्राणानपि होतुं सन्नद्धो जायते, आजीवन काराकष्टानि च सोढुं सहर्षमुद्यतो भवति । एतत् सकलवैशिष्ट्यं काव्यस्यास्य नायके नेहरौ विद्यते स्म । तदविघ्ननायकवत्त्वात् काव्यस्यैतस्य काव्यमिदं सन्दर्शति —

'यदि सुखं भवतोऽभिमतं क्षितौ
यदि समुन्नतिरस्ति च वाञ्छिता ।
भुवि विधाय हतां परतन्त्रताम्
इह भवान् वृणुतामनधीनताम् ॥'

दास्यशोषिते देशे न कोऽपि जनो मानसे शान्तिमनुभवितुं शक्नुते[1]। यदीयं जल निपीय, अन्न भुक्त्वा, समीरे च निश्वस्य शरीर मानव पुष्णाति चेत् स तामेव वसुधां प्रति नास्ति कृतज्ञस्तर्हि कृतघ्नं धिक्।[2] हुतात्मना चरित्र निशम्य, मातृभूमेश्च दुर्दशां विलोक्य कथं मम जीवन सुखा-युपभोक्तुमुत्सुक स्यात्[3]। देशस्य शोचनीया दशा मां सत्पथ परिगृहीतुं नुदति। इच्छाम्यहं मदीयः शुभसङ्कल्पो भवदीय-शुभाशिषान्वितो भवतु[4]। पुरुष परिश्रमेण दुर्गमदुस्तरेष्वपि स्थानेषु अभीप्सितमवाप्तुं क्षमो भवति तस्माद् भवेम वय देशार्पितमानसा.[5]

१ स्वदेशमेतद् भुवनप्रतिष्ठित, विलोक्य दास्येन विशोषितंचिरात्
वस-नपि स्वर्गसुखेऽपि वैभवे कथ जन. शान्तिमुपैति मानसे ॥

२ तथाहि यदन्नकणेन पोषित,
जलाभिषिक्त रजसाभिरञ्जितम् ।
दधाति देह मनुजो न तद्धरा—
कृतेकृतज्ञो धिगियं कृतघ्नता ॥ (४।२७)

३ कथं मदीय हृदय हुतात्मनां,
चरित्रमाकर्ण्य, विलोक्यदुर्दशाम् ।
विगर्हित जीवनमायं जीवितुं,
समुत्सुक स्यात् सुखभोगपङ्किलम् ॥ (४।३७)

४. विलोक्य देशस्य दशामुदारया
धिया समाधाय गृहीतवानहम् ।
यदार्यसंघर्षपथ शुभाशिषा ।
तदान्वित स्याद् भवतोऽपि कर्मणा ॥ (४।३५)

५. अवाप्तुमीशः पुरुषो हि पौरुषादभीप्सितं दुर्गमदुस्तरेष्वपि ।
अतः प्रयत्नप्रतिबद्धया धिया भवाम देशार्पितमानसा वयम् ॥
(४।३६)

इत्येतदादिवाक्यानि काव्यस्यास्य स्वतन्त्रतासाध्यार्थं, देशस्य परतन्त्रताया विनाशनार्थं, मातृभूमिविषयकभक्तिभावस्वीकरणार्थं मानवस्य मानसे प्रबलं सुदृढोत्साहं साहसञ्च जनयन्ति । देशम्प्रति अस्माकं किमस्ति कर्त्तव्यमित्यत्र यो हि संवादः कविना पितृपुत्रयोः प्रवर्तितः[1] स कस्य न मनः प्रीणयति ! कविः एतादृशान् सद्भावान् स्वकाव्ये प्रतिष्ठाप्य देशस्य बालं युवानं स्थविरञ्च आदर्शमानवमुज्ज्वलचरित्रवन्तञ्च चिकीर्षति ।

दासतो विरोद्धुं कविनिबद्धवक्तृकथितानि वचांसि मृतेष्वपि जीवनं सञ्चारयन्ति । एतादृक् को मानवो यो न तानि श्रुत्वा उत्साहशक्तिसम्पन्नो भवति ? तानि निशम्य कदर्याः कदर्यताम्, कातराः कातरताम् सहसा आलस्यञ्च त्यक्तुं नूनमुद्यता भवितुमर्हन्ति । या दासता पामरोऽपि जनो नेच्छति तस्या एव दासताया दूरीकरणार्थं काव्यमेतत् जनमात्रमुपदिशति—

'विज्ञानशक्तिप्रतिभाधनानि, कुलप्रतिष्ठार्जितसाधनानि ।
दास्येन दग्धानि मनस्विने वै, कथं प्रयच्छन्ति मनःप्रसादम् ॥
(५।३६)

अकिञ्चनः काञ्चनपञ्जरस्थः सिंहः पदार्थैर्बहुलालितोऽपि ।
करोति नादध्वनिधर्षितारे वन्यस्य किं केसरिणः समत्वम् ॥
(५।३७)

आत्मापमानं प्रतिभोह्रासं भूसम्पदास्वर्णधनापहारम् ।
विद्याकलासंस्कृतिसर्वनाशं पश्यन्नसौ दास्यमपोहते कः? ॥
(५।३८)

---

1. ४।३८ तः—'धरातले ते जनका यशस्विनः' इत्यादितः —
'समस्तमैश्वर्यं सुखप्रसाधनं, यत्र धराधामगतं स्वजीवनम्'
४४।१

साव्यमेतदिच्छति जना राष्ट्रोद्धारव्रतधरा भवेयुः । ते स्वातन्त्र्या-न्यूनं न किमपि कदापि अनुमन्यन्ताम्—

धीरैः स्वराष्ट्रोद्धरणव्रतैर्यैः
प्रतिश्रुतं, दास्यविमोचनं तैः ।
प्रस्ताव्यमत्रोपनिवेशमात्रं
समुद्धतानां किमुतुष्टये न ॥ (५।३९)

यत्र स्वतन्त्रता विहायान्यत् किमपीष्यते तत्र भाग्यलक्ष्मी-रवश्यमेव निराश्रया जायते—

स्वाधीनतां चेत् प्रविहाय किञ्चिद्
स्वीकार्यमार्यैरभविष्यदत्र ।
मन्ये, तदा भारतभाग्यलक्ष्मी-
रमङ्क्ष्यदम्भोधिमनाथयाशु ॥ (५।४०)

तदेवकथावस्तु बन्धुरत्वेन, रचनाशिल्पचारुत्वेन, महोद्देश्या-वदातत्वेन च निःसंशयमिदं सफलं हि महाकाव्यम् । अथेह काव्यगुण-चर्चातिसंक्षेपेण क्रियते ।

**कवित्वम्**

शब्दस्य अर्थस्य च समुचितं सन्निवेशं कृत्वा प्रतिभावन्तः कवयो दिव्येन वर्णनेन येन सचेतसा चेतांस्यावर्जयन्ति तदेव तान् सामान्यजनोक्तकथनाद् दूरीकरोति । यस्मिन् कवौ वाणीवैभवाव-गमनक्षमत्व यावद् भवति स तद्रहस्योन्मीलने तावदेव साफल्यं विन्दति ।

राकाचन्द्रस्य चारुत्वं या दधाति चमत्कृतिम् ।
कान्ता राष्ट्रकथा सेयं धियं प्रीणाति कस्य न ? ॥(१२।७२)

इत्येतदभिधाय कविर्मन्ये, स्वकीयां काव्यसम्बन्धिनीं मान्यता-मभिव्यनक्ति । काव्ये येषां शब्दानाम् अर्थानाञ्च सन्निवेशः कृतः स्यात्

तेषु शब्देषु अर्थेषु च ताहश्येवाह्लादकताऽऽसेदयते यादृशी शुक्लपक्ष विलसितायाः रजन्यास्तरुणिमान परिष्वजमाने चन्द्रमसि परिस्फुरति। काव्यगतान् शब्दान् आकर्ण्य तद् गतानर्थांश्च परिभाव्य मानवस्य मन उद्वेल्लरसाब्धोल्लासनिर्मरं भवत् समुत्प्लवेत । तत् सदा सर्वमपि अन्यद् विस्मृत्य तच्छब्दार्थसम्भूतानन्दमेवानुभवेत् । कस्मिंश्चिदनिर्वचनीये सुखे निमग्नं तत् स्यात्। तत् कांञ्चन ईदृशीं स्थितिं गच्छेत् या आश्चर्ये महति निमज्जेत् तत् । यच्च शब्दसमर्थं पयवगाह्य तत् 'अहं स्वप्रियतमायाः प्रियाणि मधुराणि च वचांसि सम्प्रति शृणोमि' इत्येतन्मन्येत । तौ शब्दार्थौ न केवलं तदीयमाभ्यन्तर प्रदेशं प्रीणयेतामपि तु तद्धियमपि परितोषयेताम् । एवंविधा शब्दा अर्थाश्च एव भवितु शक्नुवन्ति ये भवन्ति अनवद्या । अन्तरेणानवद्यतां ते न कदापि राकाचन्द्रस्य चारुतां वोढुमर्हन्ति । तत्र स चमत्कारोत्पादनक्षमतं-वाधिवासं विदधाति । 'चारुत्वम्' इत्येतेन कवि शब्दार्थयोरदोषत्व-मपेक्ष्यते,' 'चमत्कृतिम्' इत्येतेन तयो सालङ्कारत्वमभिलप्यते इति 'कान्ता राष्ट्रकथा' इत्येतेन तयो सगुणत्वम् इत्येतस्या च दिशाया सङ्केत विद्धत् प्रतीयते ।

गोस्वामिनो बलभद्रप्रसादशास्त्रिण काव्यम् एतद्विधा विशिष्टता' आत्मनि समावेशयितु यतते इत्यत्र न मनागपि भ्रान्तिः । लोकरुचि नं क्वापि काव्ये अवज्ञाततां नीतास्ति । न तत्र कर्णकटुता, न दीर्घसमासवती, नाविश्रुतशब्दप्रयोगो न च शब्दाडम्बर एव दृश्यते ।

### (क) भावपक्षः—

'कविरयं वीररसस्य कवि 'इत्येतत् तद्रचित काव्यस्यभावपक्षा-वलोडनेन ज्ञायते । प्रायेण प्राधान्य तासामुक्तीनां परिस्पन्दते या मन स्थितमुत्साह स्थायिभाव जागरयन्ति उत्थापयन्ति च तम् । ता आकर्ण्य देशमाराधयितु, देशं स्वतन्त्रीकर्तुञ्च बलीयान् उत्साह

समुत्पद्यते, देशार्थमसूना त्यागेऽपि उत्सहते जन । उपाधिभेदेन वीररसो दयादानधर्मयुद्धवीरभेदेन चतुर्विधतामापद्यते । एतस्मिन् काव्ये पण्डितो नेहरुश्चतुर्विधमपि वीरत्वं बिभ्राणो दृश्यते । दीनेषु दरिद्रेषु सोऽनाप्त दयाञ्चक्रे, देशस्य हितार्थं सोऽत्रत्य प्रभूना सम्पदमेव न सर्वस्वमपि उदसृजत् तस्मिन् मनूक्त धृतिक्षमादमोऽस्तेयमित्येतदादिक लक्षणं घटते स्म, सः सदैव कर्तव्यानि पालयन् अदृश्यन् स तत्तद्धर्मावलम्बिनो जनान् समदृष्ट्या ददर्श अत स धर्मवीरोऽप्यासीत् । देशस्वातन्त्र्यसमरेऽहिंसायुद्धेन स निर्भयतापूर्वक युध्यमान[1] समलक्ष्यत तस्माद्धेतोस्तस्य युद्धवीरत्वमपि सिद्ध्यति । वस्तुतो यो हि परार्थतो भवति दयासक्तस्तस्मिश्चतुर्विधवीरत्वस्याभावो न कदापि सम्भव । यत्र च सर्गे षष्ठे पण्डित मोतीलाल नेहरो[2] श्रीमत्या कमलायाः[3] च मरणस्य किञ्च निधन कविना वर्णिते, तत्र स करुणारससाधनायां सफलता गतोऽस्ति ।

स्थित-प्रज्ञत्वमापन्नो निर्मम. सुखदुःखयो ।
प्रणत. प्रक्रियां भेजे योगिनामात्मदर्शिनाम ॥ (७।४)
इन्द्रियव्यसनायेभ्यो विषयेभ्यः पराङ्मुख ।
अकरोत् कर्मयोगीव निरीहो जीवन-क्रियाम् ॥ (७।६)

इत्येतदादिका श्लोका यत्र कविना अवतारितास्तत्र स स्वपाठकाननायासेनैवाध्यात्मिकतायां निमग्नीकुर्वन् प्राप्यते । 'अपारे काव्यसंसारे कविरेव प्रजापति.' इत्येतत् सत्यमेव । कदापि स पाठकान् हर्षे, कदापि शोके, कदापि निर्वेदे कदापि च वात्सल्ये[4] क्वापि चान्यत्र विलीनीकरोति ।

---

[1](१) ५।२४–२६, (२) ६।७–११, (३) ६।२१, २३, २७, ४०
[4](४) ४।३८–४०

## (ख) कलापक्ष

नेहृद्यश सौरभम् वैदर्भीरीतिप्रधानम् । तत्र सर्वत्र ललितक्रम स्यैवदर्शनात् । कलापक्षदृष्टया च काव्यमिदं विद्वद्वरान् प्रीणयत । कविर्गोस्वामी तद् योजनयाऽञ्च कोविद । अलङ्कारेषु स रुचि भृश परिगृह्णन् प्राप्यते । उपमा रूपकोत्प्रेक्षादिसाधर्म्यमूलकार्यालङ्काराणां गुम्फनेऽस्ति स पटीयान् ।

विध्यप्रभावेण परिष्कृता सा, सुधारसस्यो दयघोऽभिरामा ।
लोकाभिराम जठरे दधाना, समृद्धरत्ना वसुधेव रेजे ॥
(२।१०)

इत्यादावुपमा

विपश्चितस्तस्य विवेकपक्षति यशोमरालो विहरन नभस्तले ।
अवाप 'फरुकसियार' भूपते रसान्वित मानसमाश्रय सताम् ॥
(१।३५)

इत्यादौ रूपकम

उत्थातुमिच्छन स्वबलेन भूय, पतन्नसौ सञ्चितसाधनेन ।
भविष्य सद्यपथे निपातोत्थानक्रियाभ्यासमिवाचचार ॥
(२।२०)

इत्यादावुत्प्रेक्षा

सूर्यो यदा शीतलतामुपेयाच्चन्द्रो भवेल्लक्ष्मकलङ्कहीन ।
सदोपमीयेत मरालगत्या मुख मधुस्यो द सुधालवालम् ॥
(१।३५)

इत्यादावतिशयोक्त्यनुप्राणितप्रतीप

सतामुदारा प्रकृति खलानां कृते सदाभूदुपतापहेतु
सहस्करो विश्वतमोऽपहारी नोलूकचेत प्रमुद करोति ॥
(१०।७)

इत्यादावप्रस्तुतप्रशंसादृष्टान्तश्च

सत्याग्रहे पुनर्यातः कारागारं जवाहर ।
विरमन्ति न बाधाभि साधवः साध्यदर्शिन ॥ (७।२४)

इत्यादावर्थान्तरन्यास पयपङ्क्तिमरवणिनीमलङ्कुर्वन्तो विभान्ति । चित्रकाव्यस्य चमत्कारप्रदर्शनेऽपि कविनिदर्शात्यमिदमिम्—

छलप्रचारिता प्रीति सदा लोकविनाशिका ।
कालिमामालिका कापि पिकाकालिक काकलि ॥ (७ ३७)

इत्यादौ तन्निबद्धत्रिशूलबन्ध सद्मिदं दृश्यते । बन्धान्तराण्यपि चान्यत्र शोभन्ते ।†

भाषा

कवेर्भाषा च तदीये काव्ये सर्वत्रैव समुचिता । सम्वादेषु गतिशीलताऽतितरा रम्या । न वाक्यानि सन्ति शिथिलानि । दीर्घसमासा-स्तत्र सततप्राप्तप्रवेशा । अस्पष्टताया दुर्बोधतायाश्च असद्भावाद् भाषा भृशं मानसं धिनोति । क्वचित्-क्वचित् तत्र एतादृश. पद-प्रयोगोऽधिगम्यते योऽस्ति चिन्त्य । तथा हि—

[क] इयाय बन्दी-भवनेषु मानिनाम् । (१।१२)
[ख] ब्रिटेनदेशाय मुदा प्रतस्थौ ।(२।२६)
[ग] निरापराधा अपि मातृवत्सला. । (४।३१)
[च] प्रदशयत् कर्मपथ निरालसम । (१२।२७)
[ङ] " " राजते भारताऽयम् । (१०।३७)

---

† ७।४१ पाशबन्ध । ७ ४६, ५० खड्गबन्ध । ७।५२ बाणबन्ध । ७।५४ मुसलबन्ध । १२।७१, ७२ चक्रारबन्ध ।

## छन्दःप्रयोगः

छन्दःप्रयोगश्च कवेः श्लाघनीयः । प्रथमे सर्गे वंशस्थं सर्गान्ते च मालिनी दृश्येते । द्वितीयसर्गे 'धनन कायम्' (२।१) इत्यत्रोपेन्द्रवज्रा 'पुण्यरश्मीमय विवेकशील' (२।३) इत्यत्रोपजातिः 'को सौ विदेश प्रमुखाधिपतीनाम्' (२।४३) इत्यत्रेन्द्रवज्रा 'विद्या विवेक-विनय प्रतिभा प्रसङ्गे' (२।४६) इत्यत्र वसन्ततिलका च प्राप्यन्ते । द्वितीयसर्गो हि एतैश्छन्दोभिः समुल्लसितोऽस्ति । तृतीयसर्गेऽपि इन्द्रवज्रोपेन्द्रवज्रोपजातयो राजन्ते । सर्गस्यान्ते हरिणी प्रयुक्तास्ति । चतुर्थे च बाहुल्येन उपयुक्तानि छन्दांसि दृश्यन्ते । पञ्चमे सर्गे वंशस्थवृत्तं वर्तते पञ्चदश श्लोकं यावत् ततः क्वचिद् द्रुतविलम्बितं ततश्चेन्द्रवज्रादिच्छन्दांसि लभ्यन्ते । षष्ठे सर्गे विषयानुरूपं मेघच्छन्दो वैतालीयं कविनोपनिबद्धम् । 'कान्तागमन' मित्यन्त्यश्लोके मन्दाक्रान्ता प्रयुक्ता । सप्तमे सर्गे आदितः ५६ तमश्लोकं पर्यन्तमनुष्टुब्वृत्तं ततश्च अन्त्यास्त्रयः श्लोकाः वसन्ततिलकायामुपस्थिताः । अष्टमसर्गेऽन्त्यश्लोके स्रग्धराऽस्ति अन्यत्र च तत्र उपरिप्रोक्तेभ्यश्छन्दोभ्यो न भिन्नं किमपि । नवमेऽपि चत्वारिंशत्तमे श्लोके शार्दूलविक्रीडितं न नवीनं किमपि छन्दः । दशमेऽपि एवमेव बोद्धव्यं 'भूयो विभान्तु प्रताप' इत्यत्र स्रग्धराऽस्ति । एतद् वृत्तं पुराऽपि प्रयुक्तम् । एकादशे च न किमप्यस्त्युल्लेखनीयम् । द्वादशे सर्गेऽपि उपर्युक्तेभ्यश्छन्दोभ्यो न किमपि भिन्नं छन्दः 'गोविन्दस्य च' इत्यादावार्या विलसति ।

## सूक्तयः

श्री गोस्वामिशास्त्रिमहाभागप्रयुक्तासु सूक्तिषु स्वाभाविकतायाः शोभा दृग्गोचरी भवति । ताः सत्यगभीराः वैदुष्याभिवन्दिताश्च । ता जीवनस्य विविधान् विषयानभिव्याप्य लिखिताः सन्ति । न तत्र वर्गविशेषनिष्ठा दृश्यते । अतो धनिका निर्धना बाला वृद्धाः, अल्पधियोऽनल्पधियः सुजना दुर्जनाः सर्वेऽपि साम्यो हितमादातुं प्रभवन्ति ।

अर्थान्तरन्यासाद्यलङ्कारानाश्रित्यापि तासां प्रयोगो विहितोऽस्ति । सूक्तिभि-रस्य हृदयस्य च गरिमा मातु शक्योऽस्ति । तासु काश्चन सत्य मुन्मीलयन्ति, काश्चन सांस्कृतिके चेतनत्वे प्रकाश क्षिपन्ति, काश्चन समाजिकी मान्यता स्वाभिमानपरका महत्ता कर्तव्यपरायणताञ्चोद्दिश्य स्वकीया सत्ता निदधते । वस्तुत सन्ति ता मानवश्रेय सम्पादिका ।

१ भवन्ति भव्या ननु लोकवल्लभा । (१।१४)
२ प्रसाविता यत्प्रमुखा निर्लिम्पा भवन्ति ये कामदुधाजनानाम् २।८
३ सन्त स्वभाव परदु खकथाकदर्या ।(४।७)
४ प्रयत्न साध्य क्रियते प रिश्रमादुपायमालोच्यविधानसम्मतम् ।
बलाबल वीक्ष्य विनापि यत्कृत फलागमे तल्लभतेतिरस्क्रियाम्
(४।१६)
५ स्वभावनम्रा वचने विपश्चित । ४।२२)
६ प्रकृति कलुषात्मनामहो सरल पश्यति वक्रचेष्टया । (५।१०)
७ ज्वलित क्षणमात्र जीवन प्रथित व चिरधूमसञ्चयात् (६।४०)
(ज्वलित हि क्षणे श्रेयो न तु धूमायित चिरम्
इत्येता सवदति)
८ विरमन्ति न बाधाभि साधव साध्यदर्शिन (७।२४)
९ क्षमा सतामुच्चगुणप्रवर्तिनी (९।६)
१० स्वभावनम्रा अपि नाम मानिनो ।
भवन्ति सङ्कल्पकठोरमानसा ॥ (९।२६)

एतादृशीभिश्चारित्र्यनिर्माणसहायिकाभि सूक्तिभिरिद काव्य मतितरामुपादेयता गमितम् । एतासा सञ्चयने हिताभिलाषिभि सनिबन्ध प्रयतमानैर्भाव्यम् । एतस्मिन् काव्ये यत्र तत्र लोकोक्तयोऽपि बहुध्य सशोभन्ते । लोकोक्तयो भाषाया प्रवाह अनयन्ति । ताभि र्भाषाया जीवने प्रौढिम्न सञ्चारो जायते, सा भवति सबला गतिमती च । अत्र काश्चन लोकोक्तयो या लोकमणतय सतां मनो विनोदयितु निधीयन्ते-

१. घृतमिव ज्वलिते वह्ने तदा। (४।१४)
२. न तिमिङ्गिलपुच्छपातनं प्रजति व्याकुलतां पयोनिधि.।
३. प्रजीर्णे भोजनम्। (७।१८)
४. व्योमपुष्पायिता। (७।२२)

भारतीयसंस्कृतिः

भारतीया संस्कृतिरीश्वरावतारवादिन्यपि वर्तते। कविस्तत्र श्रद्दधत्ते। सः तच्चर्चां विधाय भारतीयान् पुनः सस्क्तुं मिच्छति—

मातङ्गवादेन यदा धरायामधर्मवृत्तिमनुजाश्चरन्ति।
सीदन्ति सन्तः प्रहसन्ति मन्दाः खला बलेन प्रभुतां हरन्ति(११।३३)
साधून् परित्रातुमनन्तशक्तिर्विभिन्नरूपेण तदावतीर्य
प्रदर्शयन् सत्यपथ जनानां करोति धर्मस्य नवप्रतिष्ठाम्। (११।३४)

श्लोकाविमो 'यदा यदा हि धर्मस्य....' इत्येतां गीतोक्तिं स्मारयतः।

भारतीयायाः संस्कृतेरन्यतमा विशिष्टतास्ति सदाचारवादिता। भारतीयसंस्कृतेः समुपासक कवि स्वकीये देशे समागता चरित्रहीनता-तितरा दुनोति स दूयमानेन हृदयेनोदीरयति—

॥ एष देशो बहुशो यदङ्गणे चरित्रशिक्षाधिगतान्यदेशजं।
बलाद्यलोभेन वशीकृता हि तां समुद्यता हन्तुमिहास्य सन्ततिः॥
(१२।२२)

स भारतीयेषु सदाचार-दिदृक्षया स्वकाव्ये तमुपन्यस्यति।

शरणागतवत्सलत्वं च भारतीय संस्कृते वैशिष्ट्यमतः कविः स्वकाव्ये तस्याप्युल्लेखं विधाय भारतीयतरुणानां तद्दिशि मानस-मावर्जयति—

संसाधनैः संयतवस्तुभोगैः स्नेहैश्च सा जीवनदीपकानाम्।
शिखामुदारा परिवेपमानां ररक्ष सम्यक् शरणागतानाम् (१२।३८)

भारतीया संस्कृतिरस्ति आपन्नाऽऽपत्तिहाविणी। सा आपन्नातिप्रशमने अर्थबलादिप्रयोगमुचिततमं मन्यते। यदि भौतिकेन बलेन कोऽपि दुःखितानां दुःखानि हरति, आपद्ग्रस्तान् आपद्भ्यो विमोचयति तदा स जनो नूनं तस्य बलस्य सदुपयोगमनुतिष्ठतीत्येषास्ति भारतीय संस्कृतेर्मर्मज्ञता। कविः स्वसंस्कृतेरिदं सौन्दर्यं स्वदेशस्य युवसु द्रष्टुमाकाङ्क्षति अतः॥ स्वकाव्ये स भावमचन् ब्रवीति—

सह बङ्गधरासुतैरिमे युधि शत्रुं परिपात्य गर्वितम्।
ननु दानवपाशमोचनात् नवराष्ट्रोदयहेतवोऽभवन्। (१२।५०)

मातृभूमिः स्वर्गादपि गरीयसी। कविः स्वमातृभुवः शक्तेः संवर्द्धनाय अध स्थिताः पङ्क्तीर्निधाय काव्ये पुनः सादरमावाहयति—
"व्यस्फोटयत् सा परमाणुशस्त्रं शिवाय शान्त्यै जनताहिताय॥१२।६५

कवीराजनीत्यां छलस्य समावेशः नानुमन्यते। तस्यास्ति विचारोऽयम् छलप्रचारिता नीतिः सदा लोकविनाशिका सञ्जायते। स ब्रूते—
"छद्मप्रस्तावितं सर्वं भारतीयैस्तिरस्कृतम्। (७।३६)

भारतीयराजनीत्यां चरस्य स्थानं मुख्यमस्ति। कविः "प्रहित्य सन्देशहरानमूषयन् समस्तदेशान् समयेन मानिनी" इत्येतेन तद्दिशीङ्गित विदधाति। अन्यथा राजनीतिः शत्रुष्वपि नास्ति विश्वासघातिनी। सनातनकालादागतामेतां स्व राजनीतिविशिष्टतां प्रदर्शयितुमेव कविना "पुनः पुनश्चेतनया मनस्विनो प्रबोधयन्तो किल पाकशासनम्" इत्येतां पदावलीं प्रयुनक्ति।

## प्रकृति-चित्रणम्

महाकाव्ये प्रकृतिचित्रणं वर्तते महनीयमन्यतमं तत्वम्। अस्मिन् महाकाव्ये भारतीयानां हृदयेषु स्वदेशभक्तिः जागृयात् सा तत्र प्रौढ़तां दृढ़तां च गच्छेदित्येतेन प्रयोजनेन कविना प्रकृतेश्चित्रणं कृतमस्ति। न तां (प्रकृतिम्) सः स्वतन्त्रतया निदधाति। यदुद्देश्यमादाय काव्य-

मेतद्विरचित सहृदयं तत्प्रकृतिचित्रण सम्यक् परिपूरयति । अतस्तत्रस्य तच्चित्रणं समुचितमेव । गिरिः, नदी, वनम्, सूर्य, शशी, आकाशो, धरणी, वसन्तशरदादिऋतव, समीर, सर, पक्षिण, द्विरेफा, कमलानि, निर्झरश्री इत्येतस्यानि सर्वाण्यपि वस्तूनि सन्ति प्रकृतिदेव्या रूपाणि । काव्येऽस्मिन् एतेषां हृदयहारिणा रूपाणा दर्शन सम्यगेव पाठक प्राप्तुमवसरमश्नुते । देशस्य, काश्मीरप्रदेशस्य, कमलायाश्च स्वरूपवर्णने कविना प्राधान्येन प्रवृत्ते पुनीततामा बलक्षायाम सुगया सौटीर्येण प्रतिष्ठापना कृतास्ति । तेन तस्य प्रकृतेराराधनभावो-ऽनायासेन पीयषाब्दो जायत । तद्दर्शित एकोऽपि श्लोको रसज्ञाना पुर प्रकृतेर्मधुरतामुत्पादयितु लभते तथाहि—

गुञ्जार शब्दं भ्रमरावलीनां मधुस्वनं कूजितकोकिलानाम् ।
मन्दानिलं गन्धवह वहन्ती जनानिवान-वसुधा प्रपेदे (३।३३)

## चरित्र चित्रणम्

कवेश्चरित्रचित्रणमपि चारुतरम् । जवाहरलाल-मोतीलालयो कमलेन्दिरयोश्च चरित्रस्य चित्रणे कविना स्वप्रतिभया समीचीन एव प्रयोग कृतोऽस्ति । नेहरोश्चरित्रमिव चरित्रम-यत्र क्वापि कदाचिदेव प्राप्तुमर्हति । वर्तमान युगे जगति अनेके महापुरुषा सञ्जाता पर महापुरुषे नेहरौ तु किमपि अद्भुतमेव महापुरुषत्वमवर्तत । 'सर्वेऽपि सुखिन सन्तु सर्वे सन्तु निरामया' इत्येता भावना सोऽपुपुषत् । एतामेव भावना स स्वकीये आचरणे पर्यणमयत् । एतद्भावनानुसारेणैव स कार्याणि सम्पादयाम्बभूव । संसारस्य सर्वेऽपि जना उन्नते अधिकार निश्चयति सुख-समृद्धिसन्नीतिमय जीवन नेतु सर्वेऽपि जना स्वतन्त्रतया स्वस्वदेशे कार्याणि कर्तुं निर्बाध जन्म सिद्ध स्वत्व बिभ्रति-इत्येतद् विश्वोदात्ता भावना यत्र परिपोष प्राप्नुते ता देशभक्ति स महान् मानव समुपास्ते स्म । दासत्व न स सहते स्म । मानवापमान न स सोढु शक्नोति स्म । मानवतापकर्ता तस्य न क्वापि प्रियोऽभवत् । अलसे धर्मविमुखे उत्साहशून्ये अकर्मण्येऽभ्युन्नयपरिपथगामिनि निहत

सदाचारे च जने म यदि अनुपुष्यत । स प्रकृत्यैव प्रशस्ता पेशलाम वदातामभिरुचि पर्यपोषयत् । न कस्मिन्नपि मोऽद्विट् । स दीनेषु अदयत पर तद्दुरे ये नाशीयत । बाला प्रकृत्यैव तत् प्रिया अभूवन् । स स्वयमपि बाल इव, राज हंस इव योगीव आसीत् । न तत्र छल-कपट रागेर्ष्यादिदोषाणा लवोऽपि अवाप्यत । सच्चारित्र्यस्योत्कृष्टता तत्तिवृत्तकविरेष गिरा स्फुटतया प्रकटीकरोति—

**धरातले ते जनका यशस्विनो भवन्ति येषां सतया निरन्तरम्**
**समुद्यता लोकहितप्रसाधने, धनेन वाचा मनसा च कर्मणा"(४।३८)**

प० मोतीलाल नेहरू स महान् पुरुषो येन भारतमात्मान गौरवान्वित मन्यते । स विद्याया प्रतिभाया विशालहृदयताया श्रिय समृद्धं वैभवविभवानां वस्तुत आसीदेको महाननवधिक शेवधि । न तत्कालवर्ती कोऽपि तत्सादृश्यमवाप्तु प्राभवत् । यद्यपी तेन धीविद्यालक्ष्मी स्वर्गादिकाना प्रशसनीया पेशलता प्राप्ना कृता तादृश्येव तेन सत्यस्य तत्वस्य अवगमने क्षमतापि लब्धा कृताऽऽसीत् । अत एव तु स स्वदेश सेवाया सर्वस्वम्यापि समर्पणे न क्षणमपि असुह यत् । यथा कश्चित् पान्थ पथि स्थिता धर्मशाला द्वित्रीणि दिनान्यधिष्ठायापि विना राग, विना मोह विना च ममता ता जहाति तथैव स अतुलमपि वैभव क्षणेनैव अजहात् । त्यागाख्यो महानेष गुणो नितरा दुर्लभ । एव गुणसम्पन्ने जने उचितमा आत्मान मुक्तिन धन्यरूप मन्यते यो भवति विवेकवान् । मोतीलाल नेहरोश्चरित्रे विवेकस्याधिवासो दृष्टो-ऽभवत् । विवेकवत्ता तदीयस्य चरित्रस्य सर्वोत्तमा विशिष्टता आसीत् ।

**समस्तमेश्वर्यसुखप्रसाधन धन धराधामगत स्वजीवनम् ।**
**स्वदेशदास्यानलशान्तिहेतवे समर्पितं चापि कलेवरं मया (४।४३)**

एष श्लोकस्तच्चरित्रोदात्ततायां आपन्ने पर्याप्त क्षमता बिभर्ति ।

यादृशमनवद्य श्रेष्ठं चरित्रं जवाहरलालेनेहितमभूत् तादृश-मेवावदातमुत्कृष्टतमं चरित्रं तस्य प्रियतमायां कमलायामपि समलक्ष्यत। सापि वीराङ्गना आर्यपुत्रमनुजगाम। सापि प्रबलान्दोलनकारिकाऽभवत्। सापि बन्दिगृहकष्टमसहत। सापि मातृभुवो बन्धनशृङ्खला भेत्तु स्वकीयं मृदुलं कलेवरमक्षिणोत्। देशसेवायामसहनीयानि यानि कष्टानि तया सोढानि तानि तदीयं शरीरं क्षयरोगग्रस्तं चक्रुः। मृत्यु दाघ्यामधिशयानापि हन्त, न सा स्वभर्तारं देशस्वातन्त्र्यसमराजिर हातुमनुमेने। देशस्वातन्त्र्यचिन्तामेवाकाय सा अन्त्य श्वासममुञ्चत्।

स्वमातृकुलस्य पितृकुलस्य च सर्वेऽपि सद्गुणा सर्वे अपि स्पृहणीया प्रद्युम्नश्च विशिष्टता इन्दिरायां दृश्यन्ते। सापि स्वमातेव पितेव च देशस्य मानवताया भगवतश्च श्रेष्ठा समुपासिकाऽस्ति। साम्प्रतं तदीये प्रधानमन्त्रित्वे, तदीयदेशप्रशासकतया च देशः सर्वथैव वर्तते। तामधिकृत्य कवि 'पुत्रीगुणैरनुचकार पितुः कृतिरवम्' इत्येतत् सत्यमेव प्राह। 'बंगलादेश' इत्येतदाख्यस्य नवीनस्य राष्ट्रस्योदये इन्दिराया सन्नीतिनिष्ठ विवेक शौर्य-साहस निर्भीकत्वादिसद्गुण सशोभितं चरित्रं प्रधानं कारणं वर्तते। भारतस्य अणुशक्तेरुपरि प्राप्ते प्रभुत्वेऽपि अस्मत्प्रधानमन्त्रीन्दिराया देशाभ्युदयैकचिन्तचिन्तित निर्मलमन्तःकरणमेव मुख्यहेतु। राज्ञां विशेषाधिकारसमापनम्, II देशस्य विकास मार्गे समुपस्थितानामतीवानां निवारणम्, III जन-वृद्धिनिरोध IV तस्करस्वोज्जासनम्, V कठोरदण्डक्रियया समाज-मध्ये समुद्भूतानां कण्टकानामुन्मूलनम् VI व्यवसायकोषान् प्रतिष्ठाप्य तेभ्यो जनतायै च धनं प्रदाय विकासपथारूढदेशस्य उन्नयनम् इत्यादीनि ' नि सन्ति तानि महान्ति कार्याणि यानि सैव शक्ति कर्तुं शक्नोति ' शक्ति 'सच्चरित्रता' इत्येतया सम्बन्धाख्यातास्ति। श्रीमतीन्दिरा गान्धी सच्चरित्रताया इव पर्यायान्तरम्। तत्र तपःपूतता राजते तत्र देशसेवापरकं पावनमाचरणं विभ्राजते, तत्र ते गुणा दीव्यन्ति यै-

रापन्नार्तिविनाशनं जायते। एवं लोकोत्तराणां गुणानां वासस्तत्रैव भवितुमर्हति यत्र सदाचारज्योतिः प्रज्वलति। तां लक्ष्यीकृत्य कविना यदिदमभिहितं तत् सर्वाङ्गीणतया सत्यम्—

श्रद्धामयी सुजनमानसराजहंसी
सा राजनीति गगने ध्रुवतारिकेव।
आकाशदीपकशिखा भवसागरेऽस्मिन्
लोकान् निदेशयति दिग् भ्रमितान् निराशान्। (१२।६९)
दक्षा कर्मणि लोकमङ्गलविधौ सद्धर्मनीतिप्रभा
शक्तिश्च प्रतिभामियं विजयते विष्वक् किरन्तीन्दिरा। (१२।७०)

जीवनदर्शनम् :—

श्रीगोस्वामिनोऽस्मिन् काव्ये तदीयजीवनदर्शनमतितरां स्पष्टम्। स स्वदेशवासिनि जने-जने तज्जीवनं द्रष्टुमिच्छति यदस्ति सम्माननीयं विद्याकलासंस्कृतिपोषकम्। दासताक्रान्तजीवनं तदीयमेकैकं रोम निन्दति। स्वातन्त्र्ये श्वसत् तज्जीवनमपि वरं यन्निर्धनतानानादुःखसङ्कटराशिं वहति। भवतु नाम दासता अनेकविधसुखसमृद्धिप्रदा न कदापि सा अभिमता।

"अकिञ्चनः काञ्चनपञ्जरस्थः
सिंहः पदार्थैर्बहुलालितोऽपि।
करोति नादध्वनिघर्षितारे
वंन्यस्य किं केसरिणः समत्वम्? (४।३७)

इत्येतेन तज्जीवनप्रति इङ्गितं विदधाति यत्र तदीयं मनो रमते। नास्ति सः अकर्मण्यतायाः, कस्यामपि अवस्थायां समर्थकः। सतीष्वपि बहुविधासु प्रभूतासु विपत्सु, विद्यमानेष्वपि असह्नीयेषु कष्टेषु, उपस्थितेष्वपि प्रचुरेषु वैचश्येषु, सत्यपि साधनाभावे न कदापि

मानवोऽधीरता यच्छेन न स जीवनं हातुं समुद्यत स्यात्। कदापि स कर्मक्षेत्रात् पलायेत। पराधीनतायामपि साधनविहीनतायामपि स यं कमपि प्रयत्नं विधातुं प्रभवति, यामपि मन्दां मन्दतरां प्रगतिं कर्तुं-महंति तं प्रयत्नं ताञ्च प्रगतिं न परित्यजेत्। अस्ति किं जीवनदर्शन-मित्येतस्य प्रश्नस्योत्तरमिदं तदीयम् सदाचारनिष्ठमक्रियत्वमेव जीवनम्। कविना स्वकाव्ये यत् कथावस्तु समुपस्थापितं तस्य रहस्य-मेतदेव। यदास्मदीयो देश सर्वशक्तिसम्पन्नानां सिताङ्गानामधीनता-यामासीत् तदा पं० जवाहरलालनेहरू प्रभृति महापुरुषाणां सविधे केवलं स्वकीयं सत्त्वमासीत् नैकमप्युपकरणं ते मिहितवन्त परं धैर्यं विवेक,' कार्यविधिज्ञता, सहिष्णुता, प्रकृष्टतमसंयमञ्चावलम्ब्यैव ते कर्तव्यक्षेत्रेऽवातरन् प्राप्तवन्ततोऽवान्तोगत्वा सफलताश्रियम् एवमेवास्माभि सर्वेरपि जनै स्वजीवनोत्थापने प्रयतितव्यम्। कविसन्देशोऽयमेव। मन्ये,, राष्ट्रस्यावसाद दैन्यमात्महीनत्वं परिमार्ष्टुं कविरिदं नैज महाकाव्यमरचयत्। तदीयेऽस्मिन् काव्ये भारतीयसंस्कृतेभव्य दर्शनं भवति। अतोऽस्ति तदीय काव्यमेतद्राष्ट्रियेषु महाकाव्येषु श्रेष्ठ महाकाव्यम्।

कवेर्वाणी तदीयस्य हृदयस्य प्रतिबिम्बभूता भवति' इत्येतत्कथनं सत्यमेव। अत्र कविहृदयस्य दर्शनं सम्यगेवाधिगच्छति काव्यस्यैतस्यानु-शीलयिता। मानवभूमिमधिष्ठाय तेनास्मदीया वासना सुन्दरतया सूक्ष्मतया च चित्रिता। तदध्ययनावेहसि पाठकस्तन्मयो भवति। काव्यस्य परमप्रयोजनभूतां सद्य परनिवृतिमनुभवितुमारभते। कविमेत स्वतन्त्रतैव कृत्स्नतया प्रीणयति। १५।८।१९४७ इत्येतस्यां तिथौ स्वतन्त्रतायां प्राप्तायां सत्यां तदीयमनः प्रसन्नता अध स्थितयोश्लोकयो प्रतिबिम्बितास्ति—

यहन् सुगन्धि नवगन्धवाहस्तरङ्गितान्तः करणो जनानाम्।
मन्दं विसर्पन्नकरोदमन्दमानन्दमुल्लाससरसम्प्लुतानाम्। (६।३६)

प्रसन्नतोया यमुना प्रफुल्लारविन्दनेत्रा विहगस्वरेण ।
स्वाधीनताऽऽमोदमुदीरयन्ती तरङ्गभङ्गैरिव नृत्यति स्म (८।४०)

तोयस्य निर्मलता प्रसन्नत्वे, अरविन्द नयनत्वे, विहगरव स्वरत्वे, तरङ्गभङ्ग नृत्यत्वे उत्प्रेक्षमाणः कविर्यमुनायाः स्वाधीनताऽऽमोदस्वमुपदर्शयन्नाल सर्वानिव जनान् लोकोत्तरानन्दाम्बुधौ निमज्जयति ।

विद्युत्वितानप्रचुरप्रकाशप्रभावितध्वान्तमयी निशाऽभूत (८।४१)

इत्यस्मिन् श्लोके 'निद्रावसानव्यवधानहेतु' रित्येतत्पदं निधाय विद्युद्दीपानां प्रचुरेण प्रकाशेन सर्वासामपि ककुभां परिपूर्यमाणत्वात् कौशिका निशामपि वासरमेवामन्यत, इत्येतं भाव व्यंग्यभूतेन भ्रान्तिमतालङ्कारेण मनोज्ञतमं विदधत् कः न सचेतसं तस्मिन् क्षण दे निमग्नीकुरुते यमानन्द तदवसरे उपभुनक्ति स्म । स्वतन्त्रजीवन समग्रसुखसमृद्धिसन्देशवाहिसमुल्लसितमपि जीवनमतिशेते— इत्येतां स्वकीया मान्यता स विविधे प्रकारैः प्रकटीकुर्वन् प्राप्यते । 'आकाशो मेघमाले परिनिरभिनवे ' (८।४५) इत्यत्र स्वतन्त्रता - जनितमानन्दम् आकाश आत्मानं मेघजालावृतं कृत्वा धरणी अभिनवाङ्कुरवती भूत्वा, पवनो गन्धपरिपूर्णत्वलक्षणाद्रतामभिव्याप्य स्वस्वा मोद स्वातन्त्र्यजनितमभिव्यक्तीचक्रुरित्येतद् भङ्ग्याभिदधन् कविवरोऽयं स्वाभिमतजीवनदर्शनमेवाभिव्यनक्ति ।

तुलना—

अस्मिन् वर्तमाने ऽ नेहसि यानि राष्ट्रियकाव्यनक्षत्राणि भारतीय साहित्याकाश विद्योतयन्ति तेषु आचार्य श्री ब्रह्मानन्द शुक्ल कविरत्न - कृतम्,¹ १९६९ ईसवीये वर्षे प्रकाशितम् अष्टादशसर्गात्मकं 'नेहरूचरित' महाकाव्यम्* अथ च

*प्राप्तिस्थानम्—शारदासदनम्, २६४, उत्तरी गांधी कालोनी, मुजफ्फरनगरम् ।

इद श्रीमद्गोस्वामि बलभद्रप्रसादशास्त्रिप्रणीत नेहरूयश सौरभ नाम महाकाव्य संस्कृतवाङ्मयवियति कामप्यनिर्वचनीयामेव श्रियमवतारयत् परिलक्ष्येते । आभ्या भारतवसुमत्येकतोऽतीतकालगामि कमनीय काव्य-प्रकर्षं परिमलमेरनश्च साधुनिकसमयाभिमत - काव्य सौन्दर्यसौरभ सर्वतो भृश विकिरन्ती सलक्ष्यते ।

सकलरसिकसमसमुल्लसल्लास्यविलासोन्मेषोल्लासितयोरेतयो-रुभयोरपि कमनीययोर्महाकाव्ययोर्मध्ये 'नेहरूचरितस्य' महाकाव्यस्य इव हि श्रीगोस्वामिशास्त्रिणो 'नेहरूयशःसौरभम्' महाकाव्यम् अनुजम् । अनुजभूत काव्यमेतन्नेहरूयश सौरभम् आचार्य श्री ब्रह्मानन्दशुक्ल-विरचित नेहरूचरित ज्येष्ठबन्धुमनुव्रजदवेक्ष्य को हि ईदृग् रसज्ञो यो न मोदतेऽतितराम् ? तत् तदीयान् प्रसादादिगुणान् तत् तदीयान् भारतीयान् आदर्शान्, तत् तदीयाश्च निखिला सांस्कृतिकविशिष्टता, सर्वाङ्गीणतया अनुसरदादरणीय बन्धुभाव बिभर्ति । नेहरूचरितं भारत-यशोविजयन्तीमुद्धूनोति स्म या, तामेवेद नेहरूयश सौरभमतितरामुद्-धूनयति ।

सुरभारतीपरिचरणपुनीतान्त करणाना सदाचरणशरणाना भारतीयसंस्कृतिममेवनतालम्बाना भवता मनिमतामतिरोहित एव योऽर्थो यत् साम्प्रतमैकैकस्य भारतीयस्य स्वान्ते स्वदेश-प्रेम्ण उत्थापन, सवर्द्धन च सर्वेषामपि कवीना कोविदानाञ्च मुख्य कर्तव्य मिति । नेहरूचरित नेहरूयशःसौरभञ्च — इत्येते द्वे अपि महाकाव्ये रचनया एकान्ततश्च महदिद पावन कार्यमनुतिष्ठत । एतावदेवं न मनुमान्मेवैते महाकाव्यस्वरूप नूतनञ्च विषयमालम्ब्य गन्तव्य-प-सम्प्रयणाय भारतीययूना पुर प्रकाश दिशन्ती सशोभेते । मानधर्मपरिपालनपरत्वाद् वस्तुतो ह्येते काममपि दिव्यामेव सुमा-विरोहत. ।

## उपसंहारः

अस्ति 'नेहरुयशःसौरभम्' आदितोऽन्तं यावत् उदात्तावदातमात्रालङ्कारध्वनिबन्धुरम् एतेन गोस्वामि महाभागस्य कविवरप्रतिभावत्वमायासमन्तरेण ज्ञाततामुपैति। तदीया लेखनी यथा सरलया वाचया किमपि वर्णयितुमर्हति तथैव सा परमप्रौढयापि गिरया विदग्धता भजति।

'भूयाद्भव्यरसप्रसूतिरनिशं शान्ताकृतिः श्रेयसे' (१२।७५)

इत्येतां यां शुभाकाङ्क्षां कविरुन्मीलयति तामेव वयमपि मुदा प्रकाशयन्तः शम्भुचरणयोः स्वनतिमर्पयन्तो विरमामः।

❈ शुभं भूयात् ❈

दिनाङ्कः ५-६-१६७५ —रमेशचन्द्र शुक्लः*
ए-१/२३१, जनकपुरी,
नयी दिल्ली-१८

---

*एम०ए०, पी-एच०डी०, साहित्याचार्य, सांख्ययोगाचार्य, अलीगढस्थ श्रीवार्ष्णेय कालेजस्य भू०पू० संस्कृतविभागाचार्य, सम्प्रति मुरादाबादमण्डलान्तर्गत राजा का सहसपुर'-स्थानस्य सार्वजनिक संस्कृतमहाविद्यालयस्य प्रधानाचार्य, 'प्रबन्धरत्नाकर', 'नाट्यसंस्कृतिसुधा', 'गान्धिगौरवम्', 'श्रीलालबहादुरशास्त्रिचरितम्', 'बंगलादेशः', 'भरतचरितामृतम्, 'श्रीगौतमहावीरम्, 'विमानम्', 'चारुचरितचर्चा', प्रभृतीनां ग्रन्थानां प्रणेता।

❀

# दो शब्द

कविवर श्री गोस्वामी बलभद्रप्रसाद जी शास्त्री के महाकाव्य 'नेहरुयशःसौरभम्' को सहृदय-समाज के समक्ष प्रस्तुत होते हुए देखकर अत्यन्त हर्ष हो रहा है। सुरभारती के अनन्य उपासक एवं उद्भट विद्वान् आचार्य श्री रमेशचन्द्र जी शुक्ल के द्वारा अपनी विस्तृत संस्कृत-भूमिका में इसकी शास्त्रीय समीक्षा करने के उपरान्त इस विषय में कुछ और कहने की यद्यपि आवश्यकता नहीं है तथापि 'तद्गुणैः कर्णमागत्य चापलाय प्रचोदित' के अनुसार इस महाकाव्य के सम्बन्ध में कुछ लिखने की प्रवृत्ति कदाचित् असंगत प्रतीत नहीं होगी।

स्वातन्त्र्योत्तर प्रणीत संस्कृत के राष्ट्रीय महाकाव्यों की परम्परा में 'नेहरुयशःसौरभम्' अपनी सन्तुलित संघटना, विस्तृत जीवन-दृष्टि एवं समर्थ अभिव्यक्ति के कारण एक विशिष्ट स्थान रखता है। "यह उस महामानव का चरित्र है जो उस समय तक विकसित होता गया जब तक कि वह अपने समय की गरिमा का प्रतिनिधि नहीं बन गया। यह उस उदार और दयालु मानव की कहानी है जिसने 'तीसरे विश्व' के अभ्युत्थान को अपने भीतर समाहित किया साथ ही उस मानवता को भी जो मताग्रहों से ऊपर है और जो समकालीन संदर्भों से लिये उपयुक्त है। उनकी उपलब्धि उसकी प्रकृति और परिवेश की दृष्टि से, प्रधानमन्त्री की उपलब्धि से कहीं अधिक महान् है...।"[1] वास्तव में यह महाकाव्य स्वातन्त्र्य संग्राम का एक काव्यमय आकलन है। यह न तो राजनीतिक प्रेरणा से और न दलीय भावना से उद्भूत है, न यह कोरा इतिहास ही है अपितु यह राष्ट्रीय चेतना का ऐसा भव्य

१—श्रीमती इन्दिरा गांधी—'जवाहरलाल नेहरू—वाङ्मय', भूमिका सस्ता साहित्य-मण्डल, दिल्ली।

स्फुरण है जो तीनों कालों में गौरव को धारण करता है। जैसा कि कवि ने स्वयं कहा है—

"न राजनीत्या न दलप्रसङ्गतो
विशुद्धचारित्र्यगुणप्रभाविता।
मतिर्मदीया नवराष्ट्रचेतना-
प्रसारिविज्ञस्य कथामुदाहरत् ॥
न चेतिवृत्तं किल राष्ट्रभावना
प्रदर्शिनी काव्य कलेवराश्रिता।
कथेयमादर्शचरित्रपद्धते -
बिभर्ति कालत्रितयेऽपि गौरवम् ॥"[2]

रचनाकार को कवि कर्म की सूक्ष्मता और गुरुता का पूर्ण परिज्ञान है। 'श्रेष्ठ कवि अपनी विवेक बुद्धि से दोषों को दूर करके गुणों का आश्रय लेने वाले कलामय रसाभिषिक्त श्रेष्ठ कथानक की रचना करके लोक निर्माण की दिशा में प्रवृत्त होता है।'[3] 'अलङ्कृत पदों वाली, रसमयी, हृदय को आनन्द देने वाली, सद्भावों से परिपूर्ण तथा सहृदयों के अनुराग से सिञ्चित गुणमयी सुन्दर रचना कान्ता की आकृति के समान सुशोभित होती है।'[4] 'रसमयी' कलहंसनादिनी तरङ्गवती, पवित्र मानस (हृदय, मानसरोवर) से उत्पन्न सरस्वती (नदी, काव्यरचना) मरुस्थल (मरुभूमि, हृदयहीन) को प्राप्त कर नीरस हो जाती है'।[5]

कविकर्म के इस सूक्ष्म एवं गुरुतर परिज्ञान के कारण यह रचना बड़ी सशक्त और स्फीत बन पड़ी है। समुचित शब्द प्रयोग, बिम्बविधान,

---

२—नेहृदयज्ञ सौरभम्—'काव्यकथामुखम्', श्लोक १४, १५
३—वही 'काव्यकथामुखम्' श्लोक १७
४—वही श्लोक १८
५—वही, श्लोक २०

अलंकार योजना, रसाभिव्यञ्जना एवं उद्देश्य की महत्ता आदि गुण इसमें पूर्णरूप से प्रतिष्ठित हो गये हैं। 'स्थालीपुलाकन्याय' से यहाँ विहङ्गम दृष्टिपात करना उचित होगा।

कवि की सबसे बड़ी विशेषता है—उसकी 'वैदग्धी-भङ्गीभणिति' (विदग्धतापूर्ण कथन)। यही वह गुण है जो सामान्य एवं विशिष्ट कवियों के तारतम्य को स्पष्ट करता है। यही 'अलोकसामान्य तत्व' की अनुभूति का प्रधान साधन है। किसी सौभाग्यशाली को ही सरस्वती का यह दुर्लभ प्रसाद प्राप्त होता है—

"कस्यचिदेव कदाचिद्दयया विषयं सरस्वती विदुषः।
घटयति कमपि तमन्यो व्रजति जनो येन वैदग्धीम्॥"[६]

इस महाकाव्य के रचयिता ऐसे ही सौभाग्यशाली कवि हैं।

पं० मोतीलाल नेहरू की धनाढ्यता एवं यशस्विता का वर्णन करते हुए कवि कहता है—'उन मनोधन के परिश्रम से उपार्जित किये हुए इष्टसाध्य धन और यश में से धन ही केवल हाथ में रह गया और दूसरा (यश) तेजी से दिगन्त में चला गया।'

"अयत्नतोऽप्यर्जितमिष्टसाध्यं,
धनं यशश्चापि मनोधनस्य।
हस्ते धनं तस्य तु पूर्वमेव,
प्रयातमन्यत् तरसा दिगन्तम्॥"[७]

इसी प्रकार भारतीय मंदिरों के ध्वंसवर्णन में—'जहां पर मंदिरों का अग्र भाग-बिन्दु की गौरवता तक पहुँच जाता है, वहां पर भी देवमूर्तों का रुधिर-प्रवाह उच्चता को प्राप्त हो गया' कहकर कवि

६—दशरूपक १/४
७—नेहरू० १/२०

अपने वक्र कथन-सामर्थ्य को सूचित करता है—

"हिमाङ्कुशैत्यप्रतिपन्नजाड्य-
प्रभावित यत्र जलं नदीनाम् ।
तत्रापि देश-प्रतिरक्षकाणा-
मुष्णत्वमाप्नोद रुधिरप्रवाह. ॥"[8]

राष्ट्रीयता, देशभक्ति एव नेतृत्व के सम्बन्ध में कवि के विचार एकदम स्पष्ट एवं प्रौढ हैं। 'पुरुष परिश्रम से दुर्गम स्थान मे भी ईप्सित वस्तु को प्राप्त करने मे समर्थ होता है अत प्रयत्न प्रतिबद्ध बुद्धि से हम लोगो को भी अपने मानस को देश के लिए समर्पित कर देना चाहिए।'[9] 'जिसके अन्न-कण से पोषित, जल से सिञ्चित, धूलकण से रञ्जित शरीर को मनुष्य धारण करता है, यदि उस पृथ्वी के लिए वह कृतज्ञ नही है तो इस कृतघ्नता को धिक्कार है।'[10] 'अपने जीवन को देश के लिए समर्पित करता हुआ पुत्र पिता के श्रेष्ठ कुल शरीर, उज्ज्वल यश धन, धरा, धाम और बुद्धि-कौशल को सफल कर देता है।'[11] नेतृत्व वही है

८—वही १०/१६

६—वही ४/२६

१०—यथाहि यदन्नकणेन पोषितं,
जलाभिषिक्त रजसाभिरञ्जितम् ।
दधाति देह मनुजो न तद्धरा-
कृते कृतज्ञो धिगिय कृतघ्नता ॥(४/२७)

११—कुल वरेण्य, वपुरुज्ज्वल यश,
धन धरा धाम, धियोऽपि कौशलम् ।
पितु समस्त सफलीकरोति वै,
सुत. स्वदेशार्पित-जीवन प्रभ. ॥ (४/२६)

जो त्याग एवं तप से अंचित हो विपद्ग्रस्तों के प्रति जिसमे करुणा का उदय हो और जो निरन्तर न्याय-पथ को प्रकाशित करे'।[12]

देशभक्ति का ऐसा उत्कर्ष, राष्ट्रीयता का ऐसा स्फुरण एवं ओजस्विता का ऐसा उद्घोष इस काव्य में सर्वत्र ही ओत-प्रोत है।

कवि भावना के साथ-साथ विवेक एवं नीति का भी पक्षपाती है। समय पर किये गये कार्य ऋतु में वृक्ष के समान सुन्दर फल देने वाले होते हैं। समय व्यतीत हो जाने पर सज्जनों की क्रियायें, परिणाम मे निष्फल होने के कारण श्रम मात्र होती हैं।'—

"विहिता समयेन वै क्रिया
सुफलन्तीह महीरुहा ऋतौ।
समयापगमे कृतिः सता
श्रम एव प्रतिकारनिष्फला॥"[13]

यद्यपि कवि ने अपने को पाण्डित्य प्रदर्शन से बचाया है तथापि कहीं-कहीं वह वैदुषी मुखर हो ही गई है। उदाहरणार्थ—

'अभूदसौ तत्पुरुषो यदीहया
जनस्तु निर्द्वन्द्वमपि द्विगुर्भवन्।
अथाव्ययीभावितकर्म धारयन्
ययौ बहुव्रीहियुत कृतार्थताम्॥"[14]

वे जवाहरलाल ऐसे पुरुष थे जिनकी इच्छा से लोग झगड़ों से

---

१२—सदैव नेतृत्वमुदारदर्शिनो,
भवेद् यदा त्यागतपोभिरन्वितम्।
जने विपन्ने करुणागुणोदयं,
प्रकाशयेन्न्यायपथं निरन्तरम्॥(२/४७)

१३—वही. ६/२२
१४—वही ६/२७

अलग रहते हुए, बैलों के जोड़े को पालते हुए, अपव्यय-रहित कर्म करते हुए, बहुत धान आदि अन्न वाले होकर कृतार्थ हो जाते थे।

इस श्लोक में तत्पुरुष, द्वन्द्व द्विगु, अव्ययीभाव, कर्मधारय और बहुव्रीहि समासों का प्रयोग कैसी कुशलता से किया गया है !

यथास्थान दार्शनिक शब्दावली भी अनायास उमड़ती चली आती है। जैसे—

"प्रकृति-प्रत्ययोपेता जीवनप्रक्रिया बुधान् ।
विबुद्धान् सम्पदापर्द्धिन प्रमोदयति क्वचित् ।"[15]

अथवा—

"करुणावरुणालयोऽप्यसौ जगदीशो वयनीयदर्शने ।
न बभूव दयालुरुद्भवस्थितिसंहारकरो जवाहरे ।।[16]

अयत्नसम्पादित अलङ्कारों से इस महाकाव्य का सौन्दर्य द्विगुणित हो रहा है। रम्य उपमान विधान, उत्कृष्ट रूपक-कल्पना, मनोहारी चित्रात्मकता एवं उर्वर उत्प्रेक्षाओं से यह महाकाव्य भरा हुआ पड़ा है। एक दो उदाहरण पर्याप्त होंगे।

जवाहरलाल नेहरू के दिवङ्गत हो जाने पर शोक-विह्वला इन्दिरा उनसे ऐसे चिपट गई जैसे अमावस्या के अन्त में, सम्पूर्ण ग्रहण होने पर, मलिन उदय-श्री वाली प्रभा चारों ओर सूर्य से लिपट जाती है—

"विलप्यमाना प्रियदर्शिनी सा
पितुः शरीरं विकलाऽऽलिलिङ्ग ।
अमान्त-पूर्णग्रहणे प्रभेव,
सूर्यं समन्तान्मलिनोदयश्रीः ।।"[17]

इस श्लोक में कैसी अभिनव उपमान-योजना की गई है !

१५—वही ७/५
१६—वही ६/३३
१७—वही ११/२५

"महायुद्ध घन-स्यन्दि-स्वाति-बिन्दु-समाहिता ।
क्षिप्स प्रस्तावना-शुक्तिर्नाफलत् स्नेह मौक्तिकम ॥"[18]

महायुद्ध-रूपी मेघ से गिरी हुई स्वाति बिन्दु से युक्त क्षिप्स' की प्रस्तावना-रूपी सीपी ने स्नेह रूपी मोती उत्पन्न नहीं किया।' इस अनुष्टुप् में कैसा प्रसन्न रूपक उपनिबद्ध किया गया है !

उत्प्रेक्षा का सुन्दर उदाहरण भारतीय शूरवीरों के रक्त से रञ्जित हिमालय के वर्णन-प्रसङ्ग में देखने को मिलता है—

"इतस्ततो विक्षतसंनिकानां,
प्रगाढरक्तारुणितो हिमाद्रिः ।
मन्ये विसञ्ज्ञः पतितो धरायां
शराहतो मानसराजहंसः ।"[19]

'इधर-उधर गिरे हुए सैनिकों के गाढ़े रक्त से लाल हिमालय ऐसा लग रहा था मानो बाण से आहत मान-सरोवर का राजहंस पृथ्वी पर मूर्च्छित पड़ा हो।'

महाकाव्य के 'समर्पण' का—

' सूत्राणामेव विंशत्या यानुशासनपर्वणा ।
निममौ भारतं भव्यमतिव्यासेन्दिरा जयेत् ।"[20]

यह श्लोक 'व्यतिरेक' अलङ्कार का उत्कृष्ट उदाहरण है, जिसमें श्रीमती इन्दिरा गान्धी को महाभारत निर्माता व्यास से भी बढ़कर बताया गया है। व्यास जी ने प्रभूत श्लोकों तथा 'अनुशासनपर्व' जैसे १८ पर्वों की रचना करके भारत (महाभारत) को भव्य बनाया है, श्रीमती गान्धी ने केवल २० सूत्रों (२० सूत्री कार्यक्रम) और एक मात्र 'अनुशासन-पर्व' (आपातस्थिति) की रचना करके भारतवर्ष को भव्य बनाया है। 'अतिव्यासा' की सयोजना एवं व्यञ्जना कैसी सारगर्भित है।

१८—वही ७/३५
१९—वही १०/९८
२०—वही, 'समर्पण', श्लोक २

सरल श्लेष के प्रयोग में कवि सिद्धहस्त है। नेहरू जी का वर्णन करते हुए वह कहता है—"जन स्थान के लोगों में वन में व्याप्त खर (कठोर, राक्षस) एवं उग्र शासन वाले दूषण (दोष, राक्षस) का विनाश करते हुए वे महानुभाव (नेहरू) स्वर्णमृग की तृष्णा (सोने [redacted] लालच, स्वर्ण-मृग) से अवञ्चित और अन ङ्गद ( अङ्गद' नामक वानर से रहित, इस नाम के वानर के बिना) होते हुए राम का भी अतिक्रमण कर गये—

> खर जनस्थानगतं विनाशयन्,
> महोदयो दूषणमुग्रशासनम् ।
> अवञ्चितो हेमकुरङ्गतृष्णयाऽ,
> प्यनङ्गदोऽप्यतिरामतामसौ ॥"[२१]

'विरोध' का सुन्दर उदाहरण दर्शनीय है—

> "जराप्रभावेण यथा-यथास्य
> क्षीणोपजाता कृतिनो दृशः श्रीः ।
> तथा-तथा जीवनदर्शनेऽसौ
> महानुभावोऽजनि दूरदर्शी ॥"[२२]

जीवन में सफलता पाने वाले उनके नेत्रों की कान्ति, वृद्धता के कारण, जैसे जैसे क्षीण होती गई, वैसे वैसे जीवन-दर्शन में वे महानुभाव दूरदर्शी होते चले गये।

महाकाव्य के अन्त में प्रदर्शित ६ चित्र श्लोकों से गोस्वामी जी की चित्रकाव्यनिर्माणपटुता स्पष्ट परिलक्षित होती है। यह सौभाग्य का विषय है कि उन्होंने अपने इस सामर्थ्य की झलक मात्र ही दी है, इसके चक्र में न पड़कर कविता की सहजता, सरलता और सरसता को अक्षुण्ण रहने दिया है।

---

२१ वही १/३८
२२—वही ११/६

वर्ण्य विषय का चित्र-सा खींच देने में कवि नितान्त चतुर है। स्व० मोतीलाल नेहरू के इस वर्णन में अनायास, 'बूढ़े शेर' का पूरा-पूरा रूप दिखाई देता है—

"विवशः क्षपितो रुजार्दितः
शयने देशहिते समर्पितः।
मदमत्तमतङ्गजान् प्रभो
विदलन् श्रान्त इवोग्रकेसरी॥"[23]

परिस्थिति के अनुरूप प्रकृति का चित्र खींच देने में कवि पटु है। नेहरू जी के निधन के उपरान्त प्रकृति का संवेदनशील वर्णन बड़ा ही हृदयग्राही है—

"वातो विलुण्ठन् धरणीमधन्यो
वाति स्म मन्ये परिवेपमानः।
निष्कासितो देहगृहादकस्मात्,
कृतापराधो जननायकेन॥[24]

उद्वेलयन्ती यमुना स्ववन्यो
क्रूरक्रियां वीक्ष्य विनाशयुक्ते।
प्रतापरोऽवनुतप्यमाना,
तरङ्गशीर्ष परिपीडयन्ती॥[25]

सन्ध्या कृशाङ्गी मलिनाम्बरेण
निगूढगात्रा परितप्यमाना।
विमुच्य ताराश्रु-जलं पपात,
शोकेन साध्वी परिमूर्छितेव"॥[26]

संक्षेप में यह महाकाव्य वैदर्भी रीति एवं प्रसादगुण की अभिराम लीलास्थली है, युगबोध और सामाजिक चेतना का समन्वय है और वीररस का उत्स है।

---

२३—वही ६/७ २४—वही ११/१७ २५—वही ११/२१ २६—वही ११/२४

कवि की भाषा पर हिन्दी वाक्य-रचना एवं वर्तनी का प्रभाव अनेकश दिखाई देता है। सम्कृत-भूमिका में संकेतित कतिपय शब्दों के साथ 'आधीनता'[27] 'राष्ट्रीयता'[28] जैसे प्रयोग संस्कृत व्याकरण की दृष्टि से चिन्त्य है। कहीं-कहीं एकाङ्गी उपमाएं भी विचारणीय हैं।[29] कभी-कभी 'ननु' का पादपूर्ति के लिए प्रयोग भी अनपेक्षित प्रतीत होता है। किन्तु 'गुणसन्निपात' में ऐसी बातों का अस्तित्व विलीन होजाता है।

विद्या-व्यासङ्ग के वातावरण से दूर, कवि कर्म के लिए अनुपयुक्त प्रशासनिक कार्यों में फंसे हुए श्री गोस्वामी जी ऐसी सुन्दर काव्य-रचना में लीन हैं, यह निस्सन्देह विस्मय, गौरव एवं प्रशंसा का विषय है। ऐसी अहैतुक सारस्वत साधना के लिए वे निश्चितरूप से बधाई के पात्र हैं। साथ ही संस्कृत के अध्यापन में संलग्न उन लोगों के लिए अनुकरणीय हैं जो केवल पाठ्यक्रम में निर्धारित ग्रन्थों तक ही अपने को सीमित मान लेते हैं। ऐसे जन्मजात वश्यवाक् एवं रससिद्ध कवि से संस्कृत-जगत् को बहुत आशा है। ईश्वर से प्रार्थना है कि वे उनके सारस्वत-स्रोत को सदैव अव्याहतगति प्रदान करें। साथ ही प्रतिभा-परिष्कृत सहृदयों से, कवि के शब्दों में ही, अनुरोध है कि वे इस महाकाव्य का, संस्कृत-साहित्य की समृद्धि के लिए, समुचित समादर करें—

"अतो:वधार्यार्जना मनीषया
कवेरिदं चारुकथाकलान्वितम् ।
श्रमं रसज्ञाः सुरवाक्प्रवृद्धये
सभाजयन्तु प्रतिभापरिष्कृताः ॥"[30]

—कृष्णाकान्त शुक्ल
साहित्याचार्य, एम०ए०, पी एच०डी०
संस्कृत विभाग
बरेली कालेज, बरेली

स्वाधीनता-दिवस
१५ अगस्त, १९७५

२७—वही ७/५१
२८—वही, ९/१२, १४
२९—वही ३/२०, ४/१२, ५।२५
३०—वही काव्यकथामुखम्, श्लोक २१

# काव्यकथामुखम्

१

स्वराज्य संघर्षपथे प्रतिष्ठितं-
महोदयं राष्ट्रकृते समर्पितः ।
जनैरुदारं नेहरुकुलोद्भवं-
रकारि विश्वं स्वयशोभिरुज्ज्वलम् ॥

२

चरित्रमेषां भुवनाभिशोभनं
गृहे गृहे कर्णपरम्परागतम् ।
स्वबाल्यकालाद् गुरुभिः प्रशिक्षितं
प्रभावयामास मदीयमानसम् ॥

३

कठोरसंघर्षमुदारदर्शिना-
मलोकसामान्यचरित्रमुन्नतम् ।
यथाश्रुतं वर्णयितुं समुत्सुकः
सदाभवं ग्रामजनेषु शैशवे ॥

४

क्रमेण याते समये शनैः-शनैः,
सहानुभूतिः सहजाप्यजायत ।
जवाहरो येन ममाद्यचेतनं
महोदयो मानसमप्यमाश्रित ॥

५
अतः परं स्वप्नगतो यदाकदाऽ-
भिलक्ष्यमाणः कुलवृद्धसन्निभः
उपादिशज्जीवनसत्क्रियामसौ,
प्रदर्शयन् स्नेहमुदारमानसः ॥

६
जनाः पृथिव्यां बहुशो बहुश्रुता
भवन्ति लोकस्य ममोऽभिनन्दिता ।
तथापि सुप्तिः कुरुते निबन्धन-
मदृष्टपूर्वेण सहाप्यलौकिकम् ॥

७
प्रसुप्तिसंदर्शनजां कृपामपि
पितुर्विहीनस्य ममोपरि स्थिताम् ।
कृतज्ञबुद्ध्याऽहमलब्धसंगति-
र्यथा दधेऽन्तः कृपणस्य सम्पदाम् ॥

८
कृतान्तदग्धे दिवसे दिवंगते
जवाहरे शोकपरीतमानसः ।
रुरोद साश्रुस्वरमाहतान्तरो,
हृत यथात्मीयजनं स्मरन्नहम् ॥

९
प्रयागमागत्य च भस्मसञ्चया-
वशेषपूर्णं कलशं मनस्विनः ।
प्रणम्य पत्न्या सह पूतसंगमे,
महानुभावाय ददौ जलाञ्जलिम् ॥

१५
न चेतिवृत्त निखराष्ट्रभावना-
प्रदर्शिनी काव्यकलेवराश्रिता।
कयेयमाद्यस्वचरित्रपद्धते-
र्बिभर्ति कालत्रितयेऽपि गौरवम् ॥

१६
कथेयिवर मानसमन्यनोद्धृत
रसार्द्रमेतन्नवनीतमोदकम् ।
यथा भवेल्लोकमनोहर तथा
तनोतु चित्त नवराष्ट्रचेतसाम् ॥

१७
निरस्य दोषांश्चरितगुणाश्रितै-
र्विवेकबुद्ध्या सुकृयि कलान्विताम् ।
रसाभिषिक्तां विरचय्य सत्कथां
। सुलोकनिर्माणकृते प्रतिष्ठते ॥

१८
अलङ्कृतन्यस्तपदा रसान्विता
विनोदयन्ती हृदय सदाशया।
बुधै रसज्ञैरनुरागसिञ्चिता
विभाति कान्ताकृतिरुल्लसद्गुणा॥

१९
विधाय गीर्वाणगिरा गरीयसीं
कथामतो लोकहिते सरस्वती।
समर्थिता मानसवासिनी मया
जैनगूढसाहित्य - पथप्रदर्शिनी ॥

२०

रसं वहन्ती कलहंसनादिनी
तरङ्गिता पावनमानसोदया ।
मरुस्थलं प्राप्य विलुप्तसौभगा
प्रयाति वै नीरसतां सरस्वती ॥

२१

यतोऽवधार्यार्यजना मनीषया
कवेरिदं चारु कथाकलान्वितम् ।
मम रसज्ञा सुरवाक्-समृद्धये
सभाजयन्तु प्रतिभापरिष्कृताः ॥

२२

प्रबोधनाय स्खलते पदे क्वचित्,
सहादरेणार्यजनो निवेद्यते ।
अकल्पुदा ज्ञानलवेन दुर्मदाः
खला हसन्त्येव विलोक्य संस्कृतिम् ॥





# नेहरू-यशः-सौरभम्

## प्रथमः सर्गः

१

शुभं चरित्र्युविषमे हियोऽसौ,
गरं करालं धुनुकेन योऽचमत् ।
यमस्तृनि विदयतो नियेदयन्,
स मत्कृति सोपहिते नियोजयेत् ॥

२

दधामि यस्याश्चरणारविन्दयो—
रजोभिराच्छन्नमतिः कविः कृताम् ।
रसान्विता सा शरदिन्दु-चन्द्रिका—
परिष्कृता पातु कृपान् सरस्वती ॥

७

यशस्विनी या सुतवत्सला जनान्,
करोति स्व स्नेहरसेन पोषितान्।
यदङ्क - सम्भूत-पयः-परिप्लुता,
वहन्ति नद्यो नव-जीवन - प्रदाः॥

८

हिमालयाद्रि - प्रमुख - प्रतिष्ठितैः,
पवित्र - तीर्थैं ननु विघ्नलोपनैः।
यदङ्कमागत्य जनः पथच्युतः,
करोति सद्धर्म - विवेकदर्शनम्॥

९

हिमालयो भाति विशालभालवत्,
वनानि पुष्पोपचितानि कुन्तलाः।
तुषारकान्तद्युति रत्नभास्वरं,
विभाति काश्मीर-किरीटमुज्ज्वलम्॥

१०

करे त्रिशूलं ननु शत्रु - सूदनं,
दधाति याऽन्येन समृद्धिभाजनम्।
बिभर्ति मुद्रामभयामयंस्ततोऽ—
म्बुजं दधाना सुखशान्तिभावितम्॥

३

निरन्तरं तामिलनाडु - केरलौ
यदीयपादौ भुवनाभिनन्दितौ।
विलोल - कल्लोल - भराम्बु - राशिभि
र्महोदधिः क्षालयतीव निश्चलः ॥

४

तत्प्रदेशीय - घनाद्रिशृङ्खला—
समुन्नतं देवकुल - प्रतिष्ठितम्।
महाराष्ट्र - मैसूर - कलिङ्गभूषितं,
यदीयमूरुद्वयमम्बराञ्चितम् ॥

५

विहङ्गनादोद्गत - किङ्किणीरवां,
विचित्रकूटाङ्कित - विन्ध्य - शृङ्खलाम्।
मनोहरन्तीमिव रत्न - मेखलां
सुमध्यदेशो विभरन् विराजते ॥

६

गभीरनाभिस्त्रिवलीभिरन्विता,
विभाति यस्या ननु सङ्गम - स्थली।
यदीय - गङ्गा - यमुना - सरस्वती—
पयः पवित्रीकुरुते जगत्त्रयम् ॥

१५

चरित्रगीतिर्नवराष्ट्रचेतना—
प्रसूतिरीशान - विभूति - भास्वरा ।
रसानुभूति हृदये सचेतसा—
मियं पवित्रीकुरुते जगत्त्रयम् ॥

१६

तथाविधानां चरितं महात्मना—
मुदार - बुद्धि - व्यवसायबोधकम् ।
प्रगीय पुण्यास्पद - लोक - दर्शन,
प्रदर्शयन्ते कवयः कृतज्ञताम् ॥

१७

तथा हि पुण्यं चरितं यशस्विनोऽ—
भिवर्णये तन्नहरू - कुलस्य वै ।
प्रसूतिरुन्मीलित - लोक लोचना,
दधौ यदीया भुवनाभिनन्दनम् ॥

१८

सुरेन्द्रशापाद् धरणीमिवागतं
प्रखण्डमाखण्डलोक - सम्पदाम् ।
विलोक्य काश्मीरमनन्तवैभव,
न कामयन्ते सुजनास्त्रिविष्टपम् ॥

११

अथेदृशी सा जननीव वत्सला—
भिनन्दिता भारतमातृभूरियम् ।
जयत्ययमन्वं शरदिन्दु - चन्द्रिका—
विलासहासैरिव सिञ्चती भुवम् ॥

१२

यदर्थमार्यं ननु लौहशृङ्खला—
निबद्धपादं विषमेषु जीवनम् ।
इयाय बन्दीभवनेषु मानिनां,
स्वदेश - मुक्ति - व्रतिनां विवेकिनाम् ॥

१३

उपेक्ष्य विद्वेष - विपाक - भीतिकां
जना यदाह्वान - वशीकृता इव ।
निरस्य दुःशासनदास्यदानवं
व्यमोचयन् वीरवराः स्वमातरम् ॥

१४

तव पुनीतं चरितं मनस्विनां,
शशाङ्क - रश्मिच्छुरितामलं यशः ।
पुनाति येषां प्रियदर्शनं भुवं,
भवन्ति भव्या ननु लोकवल्लभाः ॥

२३

वनेचरैर्ग्राम्यजनैरितस्ततो—
नुगम्यमाना धवलैडका-व्रजाः ।
पिपासया वै वसुधा सुधा - रसं
मुदा रमन्ते ऽम्बुदशावका इव ॥

२४

सरोवरान्तस्तरणीगृहस्थितै—
स्तरङ्ग - सञ्चार - विकम्पित-स्वरैः ।
प्रियाङ्गसङ्गासवपानमन्थरैः
प्रणीयते वै मधुयामिनी जनैः ॥

२५

तुषार - निष्णात - समीर - सिञ्चिता
स्वभाव - सीत्कार-सुधा - रस - स्वनाः ।
अनङ्गरागा अपि सौम्य -कन्यका
अनङ्ग - राग - स्वर-गीतिका इव ॥

२६

स्वदेह - लावण्य - तिरस्कृत - श्रिय—
श्चरन्ति नार्यो रमणीयदर्शनाः ।
यदङ्गमाक्रान्त - विभूषण - प्रभा
विभाति चन्द्राङ्कित - लक्ष्म-सन्निभा ॥

१६

हिमाद्रि - शृङ्गैं रमणीय - निर्झरैः,
सुपुष्पितैः पल्लवितैं महीरुहैः ।
सरोवरैस्तैरिव दिव्यदर्पणैः—
विश्वं हसन्ती विहगैरुपत्यका ॥

२०

द्विरेफझङ्कार-चलद् - बलोद्गिरत्—
सुगन्धबन्धं नवफुल्ल - केसरैः ।
दिशोऽनुधावन्मधुरानिलैरिव,
न कस्य चित्तं कुरुते वश-वदम् ॥२०॥

२१

वसन्त - वर्षा - शरदादयः स्वय
विहाय दोषानिह सौम्यचारिण ।
सदा रमन्ते वन - कुञ्ज - पर्वते—
ध्वमन्दमानन्द - रस - प्रवाहिणः ॥

२२

गृहेषु यज्ञौदन - दान - दीक्षितैः
सदा विकीर्णान्नि - कणैर्मुदाभकैः ।
कुलायकूजन्नवजातशावकान्
सुखेन पुष्णन्ति यथो वरस्वनाः ॥

२३

वनेचरैर्ग्राम्यजनैरितस्ततोऽ—
नुगम्यमाना धवलैडका-व्रजाः ।
पिपासया वै वसुधा सुधा - रसं
मुदा रमन्ते ऽम्बुदशावका इव ॥

२४

सरोवरान्तस्तरणीगृहस्थितं—
स्तरङ्ग - सञ्चार - विकम्पित-स्वरैः ।
प्रियाङ्गसङ्गासवपानमन्थरैः
प्रणीयते वै मधुयामिनी जनैः ॥

२५

तुषार - निष्णात - समीर - सिञ्चिता
स्वभाव - सीत्कार-सुधा - रस - स्वनाः ।
अनङ्गरागा अपि सौम्य -कन्यका
अनङ्ग - राग - स्वर-गीतिका इव ॥

२६

स्वदेह - लावण्य - तिरस्कृत - श्रिय—
श्चरन्ति नार्यो रमणीयदर्शनाः ।
यदङ्गमाक्रान्त - विभूषण - प्रभा
विभाति चन्द्राङ्कित - सद्म-सन्निभा ॥

२७

श्रिया च सद्धर्मधिया धरातल—
　　मलञ्चिकीर्षुं प्रभविष्णु सम्पदाम् ।
सुधाननस्यन्दिवच - सुधारसा—
　　भिसिञ्चित यत्र कुल मनस्विनाम् ॥

२८

विभिन्न - धर्माचरण - प्रचारिणो
　　वसन्ति यत्रागम - कोविदा नरा ।
न केवल जीवन - मात्र - वशान,
　　विदन्ति ये जीवन-दर्शन सताम् ॥२८॥

२९

सदा स्वधर्मे निरता निरन्तर,
　　स्व - कर्म - दक्षा प्रतिभोपजीविन ।
उदार - भावेन समान - वर्तिनो,
　　जनाश्चतुर्वर्ग - फलानुरागिण ॥

३०

उपत्यकायामिह यत् कवीश्वरै—
　　रकारि साहित्यमुदार - दर्शनं ।
रसानुसन्धान - विधौ विपश्चितां
　　करोति तच्चारु - पथ - प्रदर्शनम् ॥

३१

अलङ्कृता शिल्पकला कलाविद,
प्रसाधनाच्छादन-वास्तु-रञ्जना ।
प्रहित्य देशान् स्वयश सितैरिमे,
गुणैर्वयन्तीव विगङ्गना-पटम् ॥

३२

अनन्तकालादियमुर्वरा यथा,
सुवर्ण - रत्नानि धनान्यजीजनत् ।
तथा सुवर्ण - प्रतिभाञ्चितानि वै,
मनुष्य - रत्नान्यपि पुत्र - वत्सला ॥

३३

तथा धरायन्यनमे, यशस्विनि,
प्रदेशमध्ये च, कुले द्विजन्मनाम् ।
बभूव विद्या - गुण - शील - मण्डित,
स 'राजकौल' भिधराज पण्डित ॥

३४

यथा प्रवाह सरितां हिमालयात्,
प्रसूय, लोके वितनोति सम्पदम् ।
तथाहि काश्मीर-समुद्भवा जना,
धिया धरामार्य - गुणैरभूषयन् ॥

३५

विपश्चितस्तस्य विवेक - पक्षति -
यशो - मरालो विहरन् नभस्तले ।
प्रवाप 'फर्रुखसियार' भूपते —
रसान्वितं मानसमाश्रय सताम् ॥

३६

विधाय कण्डूमयकर्णशष्कुली -
तले गुणा अस्य बुधाग्रवर्तिन ।
महीपतेश्चित्तमुदार - दर्शिनो
व्यधालयम् सगतये निरन्तरम् ॥

३७

गुणानुरागादवशः वशीकृतो,
धराधिनाथो रसवद्धया धिया ।
प्रदर्शयन् स्नेहमयं विपश्चित,
प्रहित्य सन्देशहरं समाह्वयत् ॥

३८

विहाय काश्मीर धरां विधीङ्कितं,
स राजकौल कुल-कीर्ति-वर्धनं ।
गुणैर्निबद्ध ननु देहलीश्वरं,
जगाम देशान्तरमुन्नताशय ॥

३९

जनान् पथि स्वागतहेतुनागता—
नुपादिशन् सत्य-पथं समुन्नतम्।
सदेहलीलाश्रयमेव नाकिनां,
॥ देहलीमाश्रयताभिनन्दितः ॥

४०

धिया प्रगल्भ-प्रतिभा-समृद्धया,
स्वयं विनिर्माय विवेक-सत्पथम्।
न केवलं भारतभूपतेरसौ
सभां गुणाढ्योऽविशदाशु मानसम्॥

४१

॥ देहलीं मान-धनाभिचर्चितोऽ—
भ्युवास धीमान् धरणीन्द्र-सन्निधौ।
सरांसि कुत्रापिगता विवेकिनो,
भवन्ति हंसा जनमानस-प्रियाः॥

४२

गुणाश्रयैः सौम्यगुणैः समन्ततो,
यतः प्रवाहे विनतोऽनुमुद्गरः।
तदीय-वंशो 'महूरे' यशस्विनो,
जगाम ख्यातः महूरं' धनाभ्याम्॥

४३

क्रमादमुष्मिन् सुकुले कुलाग्रणी—
　　बभूव गङ्गाधर-नामको बुधः।
प्रगल्भ-बुद्धि-प्रतिभा-गुणैरसौ,
　　जगाम लोके बहुमान-पात्रताम्॥

४४

यशो-घन-स्वाति-जलाभिषिक्ता,
　　भार्या सतो शुक्तिरिवाजनिष्ट।
मुक्ताफलं लोकहिताय 'मोती-
　　लाल' तु गङ्गाधरसूनुरत्नम्॥

४५

स बाल एव प्रतिभा-दृढीकृतं,
　　पुमान् निबध्नन् स्वगुणैः कलान्वितः।
प्रसादयन्-लोक-विवेक-लोचनं
　　चकार गङ्गाधर-भालमुज्ज्वलम्॥

४६

सारस्वती-सिद्ध-गृहे विपश्चिता-
　　मवाप्य सान्निध्यमगाध-सेवया।
कलासु सम्यग् विविधासु दीक्षितो,
　　गतः स कालेन विधिज्ञ दक्षताम्॥

४७

विधिज्ञवृत्ति विधिना समाश्रयन्,
प्रयागमागत्य पवित्र - सङ्गमम्।
अशोक - सामान्य धियाधिभारत—
मुपागमत् ख्यातिमकल्पनामसौ॥

४८

प्रताप - विद्या - प्रतिभाधियार्जिते,
दिने दिने भूरि - यशोभिरञ्चिते।
जनाः न्यमज्जन् नवतीर्थ - सङ्गमेऽ,
भियोगमुक्ति - प्रतिकार - पर्वणि॥

४९

इहापरम-शिल्प प्रतिमानरूपं,
विनिर्मितं देव - गृहानुरूपम्।
आनन्द - पूर्वं भवनं यदीय,
यशः सितच्छत्रमिवावभाति॥

५०

प्रयागतोऽप्यभिनिविष्ट - भाग्यं,
धनं प्रतापयापि यशोधनस्य।
हरते गतं तत्र तु पूर्वमेव,
प्रयागमभ्यत् तरसा विपन्नम्॥

५१

विधि-विहित-विवेक-प्रौढ-धीचन्द्रिकायां,
जनमनसि तमांसिच्छेदयन्नापदानाम् ।
नय-वियति विपश्चित्-तारकाणां समूहे,
विकसितकर-'मोतीलाल' चन्द्रो बभासे ॥

इति नेहरू यशः सौरभे
प्रथमः सर्गः ।



३

पुण्यस्थलीमेष विवेकशीलः,
यया हृषीकेशपद - प्रतिष्ठाम् ।
भागीरथी-निर्मल-नीरसिक्ता,
यत्रानिला मोदभरा वहन्ति ॥

४

उपेत्य गङ्गोद्गम - तीर्थमार्यः,
यम्भोजंदासीकर - सन्निपातम् ।
तोयेन कायं, मनसो विकारं
पवित्रयामास कुलं यदान्यः ॥

५

बद्रीविशालं भुवनाधिपालं,
केदारमार्यो विधिनासमर्च्य ।
पपौ सुधासारमिव प्रसन्नः,
पिपासितेनेव विलोचनेन ॥

६

सम्यर्च्य देवानभिवन्द्य तत्र
स्थितान् मुनीनेष तपोऽभिपूतान् ।
लेभे शुभाशीर्वचनं मनस्वी,
मनोरथानीति मनोभिरामम् ॥

७

आशीर्वचोभि र्ननु देवतानां
वृतोवरैः सिद्धमुनीश्वराणाम् ।
प्रसन्नचेताः सह जाययासौ,
गृहं प्रपेदे परिपूर्णकामः ॥

८

उपेत्य गेहं, गृहणी-सहायो,
यत्नेन धाग्निं हविषा जुहाव ।
प्रसादिता यज्ञमुखा निलिम्पा,
भवन्ति वै काम-दुघा जनानाम् ॥

९

ततो गृहे तस्य मनोरथश्री—
रिव प्रसन्ना कुलभाग्य-लक्ष्मी ।
बभार गर्भं गृहिणी गुण्या—
मुक्तामराशिं परिवर्धयन्ती ॥

१०

दिव्य-प्रभावेण परिस्फुरन्ता सा,
सुधारसस्यन्दि - वचोभिरामा ।
सोदराभिरामं जठरे दधाना,
समुद्ररत्ना वसुधेव रेजे ॥

११

शनैः शनैः गर्भभरं वहन्ती,
सा पादनिक्षेपण-मन्थराभूत् ।
तथापि रामं भुवनाभिरामं,
स्नेहेन भक्त्या च नमश्चकार ॥

१२

सा कर्क-लग्न-स्थित-शीतरश्मौ,
बुधे सिते तुर्यगते स्वगेहे ।
शनौ धने भूमि - सुते तृतीये,
षष्ठे गुरौ पञ्चमगे दिनेशे ॥

१३

निजोच्चराशौ मिथुने व्ययस्थेऽ
सुरे तथैवोच्चगते ध्वजेऽपि ।
स्वदेश - दास्यघ्न - मुहूर्त - पाते,
कुलावतंसं सुषुवे कुमारम् ॥

१४

सुताननं शारद - पार्वणेन्दुं,
विलोक्य तातस्य हृदम्बुराशिः ।
उद्वेलितोल्लास-तरङ्गसङ्ग—
प्रक्षिप्तरत्नं बहुशो वितेने ॥

१५

विद्वद्भिराप्तैरभिपूत मन्त्रै ,
संस्कारशुद्धे भवने तदानीम् ।
जन्मोत्सवे हर्षित-जीवनस्य
ज्वार यथा सर्वगत जजृम्भे ॥

१६

स्वाधीनता देशकृते जनेना —
हरिष्यतीति ग्रह गोचरं ।
विचार्य विद्वद्भिरलङ्कृतोऽसौ
बालोऽभिधेयेन जवाहरेण ॥

१७

स्नेहप्लुत स्तन्यमतो जनन्या,
निपीय नित्यं परिपोषिताङ्ग ।
शनै शनै सञ्चित शक्तिरङ्काद्
मातुर्ययौ मातृभुव प्रियाङ्कम ॥

१८

पदानताङ्गो जन - वन्दनीया-
स्पृष्ट्वा धरां पादतलस्य सान्धन् ।
द्रवत्ततो मोदभर वितन्वन्,
चचार सोऽजानु-बलेन बाल ॥

१९

मुक्त-हास्येन स्वदयेन,
मुखेन राकापति-सन्निभेन ।
प्रमज्जयल्लोक-विलोचनानि,
स्नेहाम्बुधिऽपारजलेऽग्रयानि ॥

२०

उत्पातुमिच्छन् स्वबलेन भूयः,
पतन्नसौ सञ्चित-साधनेन ।
भविष्य-सङ्घर्षपथे निपातो—
ध्यान-क्रियाभ्यासमिवाचचार ॥

२१

सम्बोधयन् भावपदैः कथञ्चिद्
गुरुस्सौ मातृजनोपदिष्टः ।
निनाय गेहे स्वजनान् समग्रं
प्रसन्नतायाः परमप्रमेयम् ॥

२२

सम्भाव्यशत्रून् निजदेशदास्य-
प्रवर्तकान् शोषयितुं तरस्वी ।
सङ्कल्प-धैर्याश्रय-साहसाङ्कं
— वक्षःस्थले सिंहनखं बभार ॥

२३

हित्वा शिशुत्वं समयेन बालः,
क्रमेण कौमारमसौ दधानः ।
चकार सौजन्य - समप्रभावं,
जैनानमन्दोल्लसितानुदारः ॥

२४

स्वजन्मभूमेर्जन-जीवनस्य,
जातेः समुद्धारकृत-प्रतीकम् ।
दधार संस्कार-महोत्सवेऽसौ,
त्रिधा निबद्धं नव-यज्ञ-सूत्रम् ॥

२५

पलाश-दण्डं स करे च भिक्षा—
पात्रं दधानो नवयज्ञसूत्रम् ।
कौशेयवासा बलि - निग्रहाय,
समुद्यतं वामनमन्वकार्षीत् ॥

२६

यज्ञाग्नि-संस्कार-समर्चितान्त—
स्तेजोदधानं जनदर्शनीयम् ।
पौराः कलाभिः परिवर्धमानं
नवद्विजं हर्षभरा दधर्षुः ॥

२७

आजन्मतो राजसुतानुरूपं,
सुखोपचारेण परिष्कृतस्य ।
आतन्वतो मोदभरं च पित्रो
र्बाल्यं व्यतीयाय कुलाग्रजस्य ॥

२८

स्वाधीनतान्दोलन आकुलाना,
श्छिद्रं परिज्ञातुमना मनस्वी ।
अध्येतुमन्त - र्बहिरङ्गविद्यां,
समुद्यतो गन्तुमभूद् विदेशम् ॥

२९

स लन्दने कैम्ब्रिज-विश्वविद्या—
लय-प्रवेशाय कुशाग्रबुद्धिः ।
पोतेन सिन्धुं परिगाहमानो
'बिटेन'-देशाय युवा प्रतस्थौ ॥

३०

कुशाग्रबुद्ध्या कुशलः समस्ताः,
कलाश्च, भाषा, विधिमर्थशास्त्रम् ।
देशस्य मुक्तिं प्रति जागरूको-
ऽध्यीतवान् शासक-राजनीतिम् ॥

३१

स्वाध्यायकालेऽन्य - विदेशजानां,
सम्पर्कमेत्याङ्गल-देशिकानाम् ।
अवेदसौ शासक-शासितानां—
भयान्तरं शोषक-शोषितानाम् ॥

३२

न दास -देशागत -छात्रवर्गः,
सहाङ्गलानामपि भेद-भावम् ।
हीनोपचारं परिवीक्षमाणो
विषादमार्यो मनसा जगाम ॥

३३

विशालदेशादपि दास्यदग्धात्,
शक्तिस्वरूपादपि दुर्बलत्वात् ।
सामान्यराष्ट्र-प्रभुतापतित्वात्,
सर्वत्र सम्मानतयाऽतिशेते ॥

३४

मान्यो ध्वजो नैव, न राष्ट्रगानं,
सर्वत्र दासत्व - कृतापमानम् ।
कथं सहन्ते सुधियः स्वदेशे,
साम्राज्यवादं परिवर्धमानम् ॥

३५

प्रयोवंरे मानस-भूमि-पृष्ठे,
स्वाधीनता-बीज-मुदीयमानम् ।
कालेन वातावरणेऽनुकूले,
समेधितं, पल्लवितं बभूव ॥

३६

प्रासादवासानन्द - गृहार्जितस्य
विलासिनो यौवन-वर्धनस्य ।
धारा धरोद्धारकृतव्रताऽस्य,
कठोर - संकल्प-पथं प्रपेदे ॥

३७

पुरन्धराणामथ राजनीति—
मधीत्य सम्यग् विदुषो विवेकी ।
अगादसौ न्यायपथं धरिष्णुः,
समाजवादे परिवाद - शून्यः ॥

३८

गौराङ्गदेशस्थित-भारतीयान्,
तिरस्कृतान्-वीक्ष्य स रङ्गभेदात् ।
क्षुब्धो, 'धरायां ननु को मदान्धः,
'विना विनिन्देत् कृतिमीश्वरीयाम् ?

३९

यन्त्रोपजाताङ्गल-देशवस्तु—
व्यापार-निष्पीडित-हस्तशिल्पाम् ।
हीनार्थसन्त्रासमय भारतस्य,
दशाममौ तत्र समीक्षते स्म ॥

४०

दल-प्रपञ्चेन जितां मदान्ध-
विमुक्त-रत्नाभरणाऽद्य दीनाम् ।
दुःशासनातङ्क कृतार्थनग्नां
ददर्श कृष्णामिव मातृभूमिम् ॥

४१

विलोकयन् देशदशां विपन्ना—
माशोषणं दण्डधरैर्जनानाम् ।
मद्रूपतासौ भृशमुद्धताना-
मुत्पीडनैराङ्गलशासकानाम् ॥

४२

स्वजन्मभूमेः प्रियभारतस्य,
दशां पराधीनकृतां विलोक्य ।
प्रतपमैश्वर्य-सुखं तितिक्षुः,
स्वातन्त्र्ययुद्धेऽभिरतो बभूव ॥

४३

कोऽसौ विदेश - प्रभुतापतीनां,
क्रीत गृहे दासमिव स्वदेशम् ।
पादाहतं वीक्ष्य, विवेकहीनः,
शेते सुखं यं मधुयामिनीषु ॥

४४

विचार-सूत्रेण, विवेक-शक्त्या,
निरन्तरं मानसमन्थनेन ।
प्रवाप सारं किल मन्दरेण,
देहेन देशोद्धरणोपचारम् ॥

४५

ऐश्वर्यलक्ष्मीं जनकात्मजातां,
हृतां, जनस्थान-गतां, समीक्ष्य ।
सधर्म-सिन्धुं, समवेत-शक्त्या,
तर्तुं प्रयेते पुरुषोत्तमोऽसौ ॥

४६

स्वदेश - मुक्ति - प्रतिबद्ध - चेता,
विवेक सन्मार्ग - पथ - प्रणेता ।
निरन्तरं शोषण-जर्जराणा—
मभुञ्जनानां हृदयस्य नेता ॥

४७

तदेव नेतृत्वमुदारदर्शिनौं,
भवेद् यदा त्यागतपोभिरन्वितम्
जने विपन्ने करुणागुणोदयं,
प्रकाशयेन्न्यायं-पथं निरन्तरम् ॥

४८

तत्र प्रवासेऽध्ययनं समाप्य
'बैरिष्टरो'पाधि-विभूषितः सन् ।
प्रद्योततेस्म प्रतिभा प्रभावात्,
प्रतप्तचामीकरवत् प्रतापी ॥

४९

विद्या-विवेक-विनय-प्रतिभा-प्रसङ्गै,
विद्वद्‌भिराप्तपुरुषैरनुशंसितोऽसौ ।
ज्ञानप्रभामय नियोजयितुं स्वदेशे,
दास्यान्धकारदलनाय निवर्तते स्म ॥

५०

अस्तंगतो विधिवशाद विवशः प्रतीच्यां,
विश्व-प्रकाशकर-भारत - भास्करो यः
दासत्वमन्ध-तिमिरं तरसा बिभित्सुः,
प्राच्यामसौ पुनरुपाक्रमताऽभ्युदेतुम् ॥

५१

पुत्रं समागतमथ प्रतिभा-प्रपन्नं,
पित्रो विलोक्य सहसा हृदयाम्बुराशिः ।
स्नेहातिरेक - नव - हर्षभर - प्रवेग-
ज्वारं सवन्नयनयो र्न शशाक मातुम् ॥

५२

स्नेहातुरोऽपि तनयश्चिर-सञ्चितेन,
श्रद्धा-प्रफुल्लकुसुमाञ्जलिना तदानीम् ।
पादौ प्रणम्य पितुरथ - भरंसंभव्या,
आसिञ्चति स्म हृदयं सुमधरसलापाः ॥

इति नेहरूयशः-सौरभे द्वितीयः सर्गः ।

---



# नेहरू-यशः-सौरभम्

## तृतीयः सर्गः

१

यथावदाता नेहरुद्भवस्य,
प्रपेदिरे दिव्यगुणा दिगन्तम्।
तथैव कौलप्रभवा कलाभिः,
कन्या शरच्चन्द्रमधश्चकार ॥

२

धरासमुद्धार - समुद्भवाय,
समर्पणार्थं पुरुषोत्तमाय।
शोशोभमाना कमलाभिधाना,
सा देहलीलोचन-चन्द्रिकाभूत् ॥

३

न केवलं कौलकुलाभिजातं,
गुणैर्सर्वदान्यैः समलङ्कृतासीत् ।
अभूद् विधे रूपकृतिः करेण,
स्वयं विनिर्माय पुरस्कृतेव ॥

४

कलेव कन्या शशिनः समन्तात्,
सौन्दर्य - वर्यैरभिसिञ्चितेव ।
दिने दिने . वृद्धिमुपागतेयं,
कालेन वै षोडशतामुपेता ॥

५

बाल्ये व्यतीते नवयौवनस्य,
पादार्पणं सुस्थिरमानसायाः ।
अङ्गेषु शालीनतया बभूव,
विनम्रतवोच्चगुणोऽतियौनाम् ॥

६

शिशुत्वमुक्ते नवदेहगेहे,
सा सादरं यौवनमानिनाय ।
भवन्ति भव्या भवनागतानां,
समुत्सुकाः सँगतयेऽतिथीनाम् ॥

७

फला वदान्या समयेन विद्या-
मशिक्षतासौ गृहकार्यदक्षा।
गुणैरुदारैर्बहुभिः विरेजे,
सुगन्धिता स्वर्णलतेव बाला॥

८

शरीरयष्टि नवकोमलेन,
स्वर्णेन मन्ये रचिता विरेजे।
नो चेदभूवन् कथमङ्गदेशे,
समीकृतानीव विभूषणानि॥

९

सूर्यो यदा शीतलतामुपेयाच्,
चन्द्रो भवेल्लक्ष्मकलङ्कहीनः।
तदोपमीयेत मरालगत्या,
मुखं मधुष्यन्दि सुधालवालम्॥

१०

प्रभाविनं भाविनमार्यदेशे,
संघर्षमङ्गैः रभिवोढुकामा।
सुकोमलामङ्गलतामजस्रं,
नियम्य सा संयमिता बभूव॥

११

तथार्थकन्याजन-जीवनार्हैः,
गुणैरुपेतामखिलैर्वदान्याम् ।
विलोक्य सम्यक् कुलदेवता तां
शुभाभिराशीभिरलञ्चकार ॥

१२

सह प्रभावेण कलिन्दजाया,
गुणप्रसूनप्रकराः सुतायाः ।
शनैः शनैः सौरभमुद्गिरन्त,
प्रपेदिरे पुण्यपदं प्रयागम् ॥

१३

तस्या गुणैः कर्णगतैः प्रसन्नौ,
न केवलं तत् पितरावभूताम् ।
समानधर्माचरणानुकूलां,
जवाहरोऽकामयतापि कन्याम् ॥

१४

आनन्दगेहे कमलागुणानां,
प्रकर्ष आसीदनिशं यथैव ।
तथैव कौलस्य कुले प्रसूता,
चरित्रचर्चाऽपि जवाहरस्य ॥

१५

अन्योन्य-सम्बन्धविधानदक्षो,
विधिस्तया प्रेरयति स्म बुद्धिम् ।
यथा हि कौलप्रवरः सुताया,
वरार्थमानन्द-गृहं प्रपेदे ॥

१६

विद्या - विवेक - व्यवहारशीलं,
विवाहयोग्यं सुतमद्वितीयम् ।
वरं वरेण्य वृणुते स्म तस्यै,
जवाहर रत्नमसौ प्रयागे ॥

१७

विवाहसम्बन्धसुधारसाभि-
र्वार्ताभिरानन्दघनावलीभिः ।
सौभाग्यवातावरणं बभूवा-
भिषिक्तमानन्दगृहे तदानीम् ॥

१८

यथानुकूलं सह सत्क्रियाभिः,
सम्प्रेष्य सम्बन्धिनमादरेण ।
विवाहपूर्वं विविधानि मोती-
लालोऽकरोन्मङ्गलपूजनानि ॥

१९

वधूगृह बन्धुजनं सुहृद्भिः,
समर्थितो मङ्गलमालिकाभिः ।
वरेण सार्धं सनयेन मोती
लाल प्रतस्थे प्रथितं प्रभाव ॥

२०

प्रस्थानकाले वरयात्रिकाणा
मग्रसर सूनुवरस्तदानीम् ।
पृथासुतानामथ राजसूये,
यजन् प्रजेशप्रतिमो विरेजे ॥

२१

स देहली - राजपथेऽङ्गनानां,
दृष्टु सम तां पुनरुत्सुकानाम् ।
ईर्ष्या - कटाक्षाभिहतोऽपि चक्रे,
हृदि प्रवेशं सहसाधिकारम् ॥

२२

कन्दर्पदर्पघ्नवपु -श्रियासौ,
किरन् ! नवस्नेहसुधाप्रसादम् ।
स देहली - लोकपयोधिपूरं,
प्रवर्धयंश्चन्द्र इवाविरेजे ॥

२३

विद्युद्विताने - घनतूर्यनादैः
सुगन्धिवाते जलसीकरार्द्रैः ।
निशामुखे तत्र महोत्सवोऽसौ
वर्षायमाणोऽम्बुधरं विरेजे ॥

२४

दासत्वपाशादखिलं स्वदेशं,
मोक्तुं महापौरुषमादधानम् ।
विवाहसूत्रे युगसूत्रधारं,
बबन्ध वं सप्तपदी कुमारम् ॥

२५

विभूषितौ तौ वरमालिकाभी
रत्नावलीभी रमणीय - रूपौ ।
वधूवरौ मञ्जुलमण्डपस्थौ,
वितेनतुर्मोदमुदार-भावौ ॥

२६

पुरोधसा स्वस्तिवचोभिरेतौ,
समर्चितौ मङ्गलपुष्पलाजैः ।
पित्रोः शुभाशीर्वचनैरुपेता-
ववन्दियातां चरणौ गुरूणाम् ॥

२७

कन्यागृहे स्वागतसत्क्रियाभिः,
पानाशनावाससुखार्चनाभिः ।
समाप्य पाणिग्रहणोपचारं,
न्यवर्ततासौ सवधूः प्रयाणम् ॥

२८

तथाविधं स्नेहरसानुपानं,
समादरं कौलगृहे स्मरन्तः ।
पथि व्रजन्तो वरयात्रिणस्ते,
पुनर्भरद्वाज-पुरीमुपेताः ॥

२९

यथाविधि स्वागतमङ्गलानि,
स्नेहातुरा वै-जननी विधाय ।
द्वारोपयातामिव राजलक्ष्मीं
वधूमथोरा गृहमानिनाय ॥

३०

वधू-प्रवेशेन, सह प्रमोद-
प्रसारमुत्कण्ठितमानसानाम् ।
न मातुमानन्दगृहोऽपि शेके,
चन्द्रोदये तोयमिवाम्बुराशिः ॥

३१

निशामुखे चञ्चलदीपदान—
प्रकाशरेखाभिरलङ्कृतं तत्।
गृहं विभाति स्म यथावतीर्णं
धरातले तारकितान्तरिक्षम् ॥

३२

पूजाकथाकीर्तनसज्जितानां—
मानन्द - निष्यन्दनिमज्जितानाम्।
तत्रोत्सवे जागरणे जनानां
निशा व्यनीयाय निरालसानाम् ॥

३३

गुञ्जारशब्दे भ्रमरावलीनां
मधुस्वनैः कूजितकोकिलानाम्।
मन्दानिले गन्धवहे वहन्ती
जनानिवानन्दसुधा प्रपेदे ॥

३४

प्रातः प्रबुद्धः सह बन्धुवर्गै
र्यथोपचारं कुलदेवतानाम्।
पूजाविधानं विधिनोपचक्रे,
सुरप्रसादो वसमास्तिकानाम् ॥

३५

दिने दिने तत्र समर्चितानां,
विवाहकृत्ये किल देवतानाम्।
मासेन विश्वासजुषां जनाना-
मभूदिवानन्दगृहोऽपि तीर्थं॥

३६

यथोपचारं बहुसत्क्रियाभि-
र्यथागतं बन्धुजनान् प्रहित्य।
सौन्दर्यसिन्धुप्रभवामथासौ,
सुखेन रेमे कमलामवाप्य॥

३७

काले गते हेमसुगन्धियोगा-
दिव स्वरूप-प्रतिभा-प्रयोगात्।
प्रजायतानन्दगृहेऽद्वितीया,
कन्याभिरामा प्रियदर्शिनी सा॥

३८

इयं चरित्रप्रतिभाश्रयेण,
स्वदेशमुत्थानपथं नयन्ती।
प्रधानमन्त्रित्वपदं सुकृत्यै-
र्विभूषयन्ती भुवि राजते सा॥

३९

यस्या महाकाव्यमयं चरित्रं
स्वयं कवित्वप्रतिमां प्रसूते ।
किमत्र तस्या महनीयकीर्ते-
रज्ञानुवादेन सुदक्षिणायाः ॥

४०

तथापि तस्याश्चरितं प्रयत्नं,
यथाप्रसिद्धं ननु वर्णयामि ।
यदस्य वंशस्य यशोऽवदातं,
निनाय दिक्कुञ्जरकर्णमूलम् ॥

४१

अपि परिजनस्नेहानन्दाम्बुधौ परिमज्जितः,
भुवनमभितः कुर्वंश्चन्द्रोज्ज्वलं सुयशःकिरन् ।
विपुलविभवैर्मोतीलालः स्वदेश - धृतव्रतं,
विषय विमुख मद्धानार्यं शशाक प्रवाहरम् ॥

इति नेहरूयशःसौरभे
तृतीयः सर्गः ।



# नेहरू-यशः-सौरभम्

## चतुर्थः सर्गः

१

ऐश्वर्य-सम्पत्ति-समेधमाने,
जाया-सुता-स्नेहमये गृहेऽपि ।
हेलावती नैव सुखं प्रपेदे,
स चम्पकोद्यान इव द्विरेफः ॥

२

अगाधमैश्वर्यमनन्तकीर्तिं,
यया समासादितवान् पिताऽस्य ।
नाकर्षिकामुं विधिवाद-वृत्तिः,
स्वाधीनतायै विहितव्रतस्य ॥

३

यदा धनोत्पीडन-शोषणेन,
कदर्थितान, मोहनदासगांधी ।
सत्याग्रहान्दोलनमाग्रहीतुं,
जनानसौ भारत माजुहाव ॥

४

तदा विदेश-व्यवसाय-बन्धः,
स्वदेश-निर्माणकृते प्रबन्धः ।
अहिंसया सत्यपथं प्रयातु-
मभूज्जनानां निचये ऽनुबन्धः ॥

५

सत्योपदेशमुदिताः कृषकाः समन्ता-
दान्दोलनैरसहयोगमुपानयन्त ।
सर्वत्र शासकजनान् विधिभञ्जनेन,
क्रुद्धान् व्यधुः सपदि चन्दनपन्नगान् वै ॥

६

ग्रासेतुपर्वतनदीसिन्धुकलिङ्गवङ्गं,
तीव्रं निरोहनरमेधमुपेक्षमाणाः ।
आतङ्किता ग्रपि विदेशविनिर्मितानि,
वस्त्राणि वस्तुनिचयान् मनुजा श्रधाक्षुः ॥

७

देशव्रते कृतमतीन् 'जलियानबालो'—
द्याने हतान् ननु निरीह-जनान् विलोक्य।
चेतोऽप्यदूयत बलेन जवाहरस्य
सन्त, स्वभावपर-दुःख-कथा-कदर्या ॥

८

गाँधी प्रदर्शितपथेन मनोरथाना-
मालोकयन् सफलतामिह देशजानाम्।
सत्याग्रहे कृतमति धृति धारयानो-
धीरो जवाहरवरोऽपि समुद्यतोऽभूत् ॥

९

पुत्रस्य देश-हित-चिन्तनपृष्ठभूमौ-
विश्लेषयन्नसहयोगमर्ति मनस्वी।
सम्भाव्य-शासकजनोपविधिञ्च 'मोती-
लालो' विचारचतुरोऽपि जगाम चिन्ताम् ॥

१०

आनन्दगेहर्मपि, राजसुखोपमान-
मैश्वर्यमान-परिवार-जनान् विहाय।
बन्दीगृहाग्रह-विधानविरोध-मङ्गं,
स्वाधीनताविगमनं स च शङ्कते स्म ॥

११

तमेकपुत्रः प्रियमुन्नताशयं
समीक्ष्य देशार्पितजीवनं, पिता ।
स्वयं परिज्ञातुमनाः परिस्थितिं,
विचारहेतोः सुतमाजुहाव सः ॥

१२

सभागतौ तौ प्रतिभाविभूषितौ,
विचारहेतो जनकात्मजौ तदा ।
पयोधिसन्धानकृते समुद्यतौ
रघुप्रवीरौ महसाऽनुचक्रतुः ॥

१३

तमानतं स्नेहमयेन चक्षुषा,
विलोकयन्नात्मजमादराद्वसौ ।
उवाच धीमानवधारयन् दिशं,
कुलाग्रजातस्य सुतस्य, चात्मनः ॥

१४

"धनं यशश्चार्चितमुज्ज्वलं कुलं,
सुखोपभोग - प्रथित - प्रसाधनम् ।
नरा यदिच्छन्ति भुवि स्वजीवने,
समस्तमेतत् तव सम्मुखे स्थितम् ॥

१५

"सुत ! त्वदीयं सुरसद्मसन्निभं,
गृहं, कलत्रं परिवार - संयुतम् ।
मनोज्ञवाणी - व्यवहार - कौशलं,
प्रशस्तमेतत् - तव जन्म - जीवनम् ॥"

१६

"गुणानुरक्ताङ्गलशासका अपि,
स्वयं प्रयच्छन्ति समानमासनम् ।
विवेकसंसर्ग - सुखोपजीविनो,
वहन्ति रत्नान्यपि मौलिनाऽह्वयः ॥"

१७

"निरन्तराराधनसिद्धदेवता-
प्रसादसम्पादित - सर्वसाधनम् ।
प्रालोकसामान्य - विभूतिभास्वरं,
बिभर्ति सौभाग्यफलं स्वजीवनम् ॥

१८

"यदुद्धतैराङ्गलशासकंजनैः,
प्रदूयते लोकहितापकारकैः ।
कथं विरोधेन, विधानभञ्जने-
निपीडनं शामयितुं प्रशक्यते ॥"

१९

"प्रयत्नसाध्य क्रियते परिश्रम-
मुपायमालोक्य विधान सम्मत् ।
बलाबलं वीक्ष्य विनापि यत्कृतं
फलागमे तल्लभते तिरस्क्रियाम् ॥"

२०

"अत प्रयातो भविता, निरन्तरं
स्वदेशदास्यापचये विधानतः ।
यतो न कालः प्रतिबुद्धचेतसां
प्रयातु बन्दी-भवनेषु निष्फलम् ॥"

२१

विचार गम्भीर-गिराभिधाय तं
स्वयं मनीषी विरराम भाषणात् ।
प्रवक्तुकामाय सुताय सादरं
प्रदातुमायः समयं यथोचितम् ॥

२२

पितुर्वचो भावनयाभिभूषितं
समीक्ष्य, धीमानुपचारमिश्रया ।
गिरा गरीयांसमुवाच सादरं,
स्वभावनम्रा वचने विपश्चितः ॥

२३

"धिया समाधाय विवेकसिद्धया,
यदुच्यते तात, शिवाय तन्मम ।
सुतस्य को नाम हित - प्रसाधने,
क्षमो धरण्यां जनकाधिक जन ॥"

२४

"धन, यशो, वैभवशालि जीवन
मनुष्यमात्रस्य चिराभीप्सितम् ।
यदाप्यते लब्धमतोरयस्य वै
जनस्य किं नाम ततो न पूर्यते ?" ॥

२५

"तथाप्यसौ लोकहिताय चर्चिता,
कृति सतामातनुते सित यश ।
यथा तथानन्दपथानुवर्तिनो,
जनस्य भोगाभिरतस्य नात्मन ॥"

२६

"स्वदेशमेतद् भुवनप्रतिष्ठित,
विलोक्य दास्येन विशोषित चिरात् ।
वसन्नपि स्वर्गं सुखेऽपि वैभवे,
कथ जन शान्तिमुपैति मानसे ॥"

२७

"तथा हि यत्रान्नकणेन पोषितं ।
जलाभिषिक्तं रजसाभिरञ्जितम् ।
दधाति देहं मनुजो न तद् धरा-
कृते कृतज्ञो धिगियं कृतघ्नता ! ॥"

२८

"सुखोपभोगप्रभवोऽपि भारतो,
यशोभिरासीद् भुवनाभिनन्दित ।
प्रशासके पद्दलितो विदेशिभि-
र्गजेन्द्रवद् प्राङ्मुखे विपर्यति ॥"

२९

"धरामिमां शोषण-जर्जरीकृतां,
निरङ्कुशैराङ्गल-शासनेश्वरैः ।
विलोक्य दीनां जननीमिवातुरां,
सचेतसः कस्य मनो न दूयते ॥"

३०

"कला विशीर्णा, कृषकाः कदर्थिताः,
समृद्धवाणिज्यमपास्तमाङ्गलैः ।
विलुप्तशक्तिप्रतिभाप्रसाधना
कथं नु जीवन्ति जना व्यथार्दिता ॥

३१

"जनाः स्वदेश व्रतिनोऽभिमानिनो,
निरापराधा, अपि मातृवत्सलाः ।
मदासनोन्मादतमोऽन्यशासकैः,
कृता हि कारागृहवन-प्रवासिनः ॥"

३२

"कदर्यमार्या ननु दास्यजीवन—
मसह्यमन्वन्तो भुवि जीवितुं वृथा ।
प्रदर्शयन्तो जनमुक्तिसत्पथं,
हुतात्मदेहाः सुयशांसि लेभिरे ॥"

३३

"कथं मदीयं हृदयं हुतात्मनां,
चरित्रमाकर्ण्य, विलोक्य दुर्दशाम् ।
विगर्हितं जीवनमार्य ! जीवितुं,
समुत्सुकं स्यात् सुखभोगपङ्किलम् ?" ॥

३४

"न केवलं तात ! मया, भवादृशैः,
गुणप्रकर्षैर्नहरुकुलोद्भवैः ।
भवत्प्रजैर्जन्मभुवः कृते कृतं,
दधाति सच्चन्द्रमरीचि गौरताम् ॥"

३५

विलोक्य देशस्य दशामुदारया,
धिया समाधाय गृहीतवानहम् ।
यदार्य - सघवस्य शुभाशिषा
तदन्वित स्याद् भवतोऽपि कर्मणा ॥"

३६

"अवाप्नुमीश पुरुषो हि पौरुषा-
दभीप्सित दुर्गमदुस्तरेष्वपि ।
अत प्रयत्न - प्रतिबद्धया धिया
भवाम देशार्पितमानसा वयम् ॥"

३७

गरीयसीमर्थपरां मन प्रिया
निशम्य वाच जनतापहारिणीम् ।
प्रसन्नचेता स्वकरेण सस्पृशन्,
तदीय - पृष्ठ निजगाद सादरम् ॥

३८

'धरातले ते जनका यशस्विनो,
भवन्ति येषां तनया, निरन्तरम् ।
समुद्यता, लोकहित - प्रसाधने,
धनेन, वाचा, मनसा च कर्मणा ॥

३९

"कुलं, वरेण्यं, वपुरुज्ज्वलं यशः,
धनं, धरा-धाम, धियोऽपि कौशलम् ।
पितुः समस्तं सफलीकरोति वै,
सुतः स्वदेशार्पित - जीवन - प्रभः ॥"

४०

"न मे क्वचिद् देशहितावरोधिनी
मतिः परं सम्मतिरस्ति साधने ।
परिस्थितिं वीक्ष्य सदानुरागिणा,
कठोरमार्गाद् विनिवारितो मया ॥"

४१

"शिशुत्वमारभ्य समस्तसाधने—
रहष्ट - दुखं सुखधाम जीवनम् ।
यदर्पितं देशकृते कृतात्मना,
त्वया सुतेनास्तु किमन्यदीप्सितम् ॥"

४२

"यदुच्यते पुत्रहितप्रकाम्यया
पिता विधत्ते सुखसाधनान्यतः ।
समर्पिते राष्ट्रकृते तनूद्भवे
किमेभिरेतैर्वयं - सुखैर्मदर्जितैः ॥"

४३

"समस्तमैश्वर्य - सुखप्रसाधनं,
धनं धराधामगतं "स्वजीवनम् ।
स्वदेशदास्यानल - शान्तिहेतवे
समर्पितं चापि कलेवरं मया ॥"

४४

जनमनः - प्रतिबन्धकमुद्धत,
कलुषितं कुटिलाङ्गलशासनम् ।
असहयोग - बलेन "जवाहर,
प्रतिविधातुमसौ स्वयमाविशत् ॥

४५

इत्थं प्रयत्न-विधि-भिन्न-मतोऽपि मोती-
लालो विलोक्य सुतमर्पितमानसं वै ।
मोहं विहाय विधिवत् तिविदेशिवासो—
भोगान् जुहाव सहसा नवराष्ट्रयज्ञे ॥

४६

आयन् यदीय परिधानकृते विदेशाद्
वस्त्राणि यन्त्ररचितानि सुचिक्कणानि ।
चक्रप्रचालन-विनिर्मित-तन्तु-वासो-
विभ्राजमानतनुरेष समर्पितोऽभूत् ॥

४७

पर्यङ्कशुभ्रशयनेऽपि यमिन्दु - गौरे,
निद्रा सदाङ्कितपदा परिसेवते स्म ।
द्वारस्थितप्रहरिणामवधान - घृष्टां,
कारामसौ कुटिलकालवशात् सिषेवे ॥

इति नेहरूयशः सौरभे
चतुर्थः सर्गः ।

---

# नेहरू-यशः-सौरभम्

## पञ्चमः सर्गः

१

'जलियाँ' नरमेध-निष्ठुरे,
दहने देशहिते हुतात्मनाम् ।
चरितान्यनुसृत्य भारते,
जन-रोषः परितः समेधत ॥

२

जनरोष-महार्णवस्ततो,
बलबुद्धिप्रतिमोर्मि-सङ्कुलः ।
तटवृक्षमिव प्रशासनं,
परितः क्रान्तुमवर्धताकुलम् ॥

३

ननु भारत - शिल्प - शातनं
विविधं वस्तु - समूहमात्मन ।
नगरेषु, जनाश्चतुष्पथे—
ष्वदहन्नाङ्गलदेश - निर्मितम् ॥

४

जनजागरितात्म - चेतना—
प्रवणाश्छात्रजना सहस्रशः ।
जनदास्यविशानिदेशका—
नजहुर्ज्ञान - गृहानयाङ्गलान् ॥

५

विनय - प्रतिरोध - साधनान्,
ननु सत्यव्रतिनोऽप्यहिंसकान् ।
बहुशः परिपीडनैर्जना—
ननयन् मृत्युपथं प्रशासकाः ॥

६

कुटिल - प्रतिकार - निष्ठुरान्
क्वचिदातङ्कित - लोकमानसान्
निजदेश - गलग्रह - ग्रहान्
पुरुषा बध्नुरयाङ्गलानपि ॥

७

जनमानसमुत्तरङ्गितं,
नितरां दास्यविमोचनाकुलम्।
परिमातुमिवाधिशासकः,
प्रहितो राजसुतोऽथ भारतम् ॥

८

नरनाथ-सुते समागते,
सहसाऽऽतङ्कयुतोऽधिशासकाः।
अपि नाम सुरक्षया जनान्
बहुशो बन्दिगृहातिथीन् व्यधुः ॥

९

नहरू-भवनं तदाभवज्-
जनतान्दोलन-सङ्गमस्थलम्।
विपुलं म्रियते स्म यत्र वै,
मनुजं राष्ट्रविमोचनव्रतम् ॥

१०

जनकेन समं जवाहरं
कुटिला बन्दिगृहे न्यवेशयत्।
प्रकृतिः कलुषात्मनामहो,
सरलं पश्यति वक्र-चेष्टया ॥

११

ननु यस्य वितर्क-ताडिता
　प्रथमं वक्तुमहो न शेकिरे ।
　　भवनाट्यगृहे स्थिताश्च ते
　　　व्यमृशन् दण्डविधिं, विधिवंसी ॥

१२

नगरं तवभूम भारते
　युवराजागमन-प्रसंगतः ।
　　विनयेन विरोधदर्शने-
　　　ष्वभवद् यत्र न हिंसनं सताम् ॥

१३

दमनक्रतुरुद्धतैः सतां,
　बलिबन्दीगृह-सेवनाहुतिः ।
　　विहितो ननु राष्ट्रबन्धकः—
　　　नगर - ग्राम - गृहेषु, वर्त्मनि ॥

१४

जनहृदि, प्रतिकार-परायणे,
　सुपरिकल्पित - राष्ट्रजयोदये ।
　　समभवद् युवराज-समागमो,
　　　घृतमिव ज्वलिते दहने तदा ॥

१५

जनमत नवशौर्यसमायुत
कृतविरोधमवेक्ष्य मदोद्धता ।
प्रमुख-साइमन दलमिङ्गितं
रणमयप्रभिनेतुमिवाङ्गला ॥

१६

इह मति प्रतिभा-प्रतिभासिते,
विपुल मान्य-मनीषि जने सति ।
दलमयोजित - भारत - यशज,
प्रहितमाङ्गल - देशजनैश्चितम् ॥

१७

अखिलमाङ्गलदेशजनान्वित,
विपुल भारत-भाग्य-विधायकम् ।
दलमवेक्ष्य जनान् जननायका-
असहयोग - विरोधमुपादिशन् ॥

१८

मुम्बापुरे सागर - पोतमध्यान्,
शरचागत तत्र तटेऽवतीर्णम् ।
आयोगमासोक्ष्य जना समन्तात्,
श्यामध्वज श्वेतदल निनिन्दु ॥

१९

कार्यावरोधेन जना विरोधं
प्रदर्शयन्तो विपुलप्रवाहम् ।
प्रवात-सम्पात-ससत्तरङ्गं,
पयोधिमार्या सहसानुचक्रुः ॥

२०

"निवर्ततां साइमन ! स्वदेशः"
बुबुर्जना उच्चतम स्वरेण ।
तृषार्दितानां जलसीकरार्द्रै-
रावासनं नं क्रियते प्रसादः ॥

२१

विरोध-वृद्धि बहुशः प्रदेशे-
ष्वालोक्य दुःशासन-कल्प-रक्षाः ।
आग्नेय - शस्त्रे संयुद्धे सुतानां
रक्तं रसिञ्चन् - मृदु - मातृ-वक्षः ॥

२२

युक्त-प्रदेशे ननु लक्ष्मणस्य
पुण्ये पुरे साइमनं विरोद्धुम् ।
नेतृत्वमाधाय जवाहरस्य
ज्वारो जजृम्भे जनतार्णवस्य ॥

२३

आरक्षिणामाङ्गल शासनस्य
सहारशक्त योद्धतमानसानाम ।
आतङ्कपङ्केन कलङ्किताङ्क
चुक्रोश रोषान्नगर सदानीम ॥

२४

कठोरघात शतश समन्ततात्
सताडितस्तत्र जवाहरोऽपि ।
स्वराज्य यज्ञानलमास्फुरन्त
स्वदेह रक्ताहुतिभि र्जुहाव ॥

२५

असौ विरोध प्रतिरोध जात
प्रहार घात - क्षतजारुणाङ्ग
वसतकाले नव - रङ्ग सपा-
नुरञ्जित कृष्ण इवावभासे ॥

२६

सतात् समन्ताद् धवलांशुकेषु
यशस्विनो रक्तकणा विकीर्णा ।
उपार्जनाय प्रचुरात्म - शक्ते
प्रगाढमुप्ता इव शौर्यबीजा ॥

२७

अचेतनो मर्महतो द्विपद्भि,
क्षणादसौ भूमितले पपात ।
प्रहोतुमग्याय विनाशनाय
रुद्रमातुरङ्कादिव नव्यजातम् ॥

२८

अहिंसकान्दोलनसङ्गतानां,
प्रताडनं राष्ट्रसमर्पितानाम् ।
मदोद्धतं षंडधराख्यवारैः
कलङ्कितं शासनमाङ्गलानाम् ॥

२९

इतस्ततो दण्डपुरप्रपात-
प्रताडिता अप्यनुयायिवर्गाः ।
स्वरंध्रचतुर्दिग् विहितावरोधा,
विरोधिभिः साहसनं निनिन्दुः ।

३०

विचारहेतोरिह भारते तद्,
यत्र प्रयात दलमाङ्गलानाम् ।
स्वदेशमुक्तिव्रतबद्धचेता,
स्तत्रैव लोको विदधे विरोधम् ॥

३१

कृतावरोधोऽपि जनै विरोध-
व्यग्रं विवेकव्यवहारशून्य ।
यथाभिनेय चरित विधाय
प्रयातवान् साइमन स्वदेशम् ॥

३२

यथागत साइमने प्रयाते
क्षुब्धा निकार-प्रतिकारकामा ।
दासत्वपाशान्निजमातृभूमि
मोक्तु जना यत्नपरा बभूवु ॥

३३

महासभायामतएव तत्रा-
धिवेशने पितृवर प्रधाने ।
स्वातन्त्र्यमेव प्रभुशक्ति पूर्ण,
प्रस्तावित वीर - जवाहरेण ॥

३४

महानुभावै बहुभिस्तदानीं,
पित्रापि, तत्रोपनिवेशमात्रम ।
स्वराज्यमेव प्रथम - प्रयासे,
प्रस्ताव्यमासीन्ननु भारतस्य ॥

३५

प्रस्तावनान्दोलितमानसानां,
समक्षमान्दोलन-दीक्षितानाम् ।
उवाच गम्भीरमुदारवाचा
प्रस्तुत्यमर्थं समुपस्थितानाम् ॥

३६

विज्ञान - शक्ति - प्रतिभा-धनानि,
कुल-प्रतिष्ठार्जित-साधनानि ।
दास्येन दग्धानि मनस्विने वै
कथं प्रयच्छन्ति तु मम -प्रसादम् ॥

३७

अकिञ्चनः काञ्चन-पञ्जरस्थ,
सिंह पदार्थं बहुलालितोऽपि ।
करोति नाद - ध्वनिधर्षितारे-
र्वन्यस्य किं केसरिणः समत्वम् ॥

३८

आत्मापमानं, प्रतिभोपहासं,
भू सम्पदा-स्वर्ण-धनापहारम् ।
विद्याकलासंस्कृति - सर्वनाशं,
पश्यन्नसौ दास्यमपोहते कः ॥

३९

चौरे स्वराष्ट्रोद्धरणव्रते यैः-
प्रतिश्रुतं, दास्य-विमोचनं, तैः ।
प्रस्ताव्यमन्त्रोपनिवेशमात्रं,
समुद्धतानां किमु तुष्टये न ॥

४०

स्वाधीनतां चेत् प्रविहाय किञ्चित्,
स्वीकार्यमार्यैरभविष्यदत्र ।
मन्ये, तदा भारत भाग्य-लक्ष्मी-
रमङ्क्ष्यदम्भोधिमनाश्रयाऽऽशु ॥

४१

सदर्थ-नीतिप्रतिपन्नमुक्त्वा,
वाक्यं, मनीषी विरराम सद्य ।
स्वल्पोऽपि सारस्तु प्रभु र्यहूनां,
यथाङ्कुशो मत्तमतङ्गजानाम् ॥

४२

जनेषु गम्भीरवच -प्रभाव-
प्रभिन्निया तत्र सभाऽङ्गनेषु ।
महार्णवे पार्वण-च-द्ररश्मि-
ज्वारोपमान्दोलितमानमाभूत् ॥

४३

वचांसि दुःशासन-दास्य-दीना-
मुद्धर्तुं मुक्तान्यपि मातृ-भूमिम् ।
समीक्ष्य कर्तव्य-विमूढ-भावा,
जनाः सभास्थान-गता बभूवुः ।

४४

भावार्थं गम्भीरमुदारवाक्यं,
सभासदः स्वागत-योग्यमाहुः ।
तथापि सद्यः प्रतिकार्यमार्या,
न शेकिरे प्रस्तुतमाग्रहीतुम् ॥

४५

सभापति-प्रस्तुतमेव चान्ते
स्वराज्यमेवोपनिवेशमात्रम् ।
उपस्थितैः स्वीकृतमार्यवृन्दैः
प्रस्तावितेनापि विवक्षितेन ॥

४६

वर्षं प्रदेयं यदि चेद् मदान्धै-
र्न दीयते, राष्ट्र-जनस्तदानीम् ।
प्रभुत्व - शक्ति - प्रतिपक्षमेव,
स्वीकर्तुमीशो भविता स्वराज्यम् ॥

४७

सिद्धान्त-नीति-मत-भेद-भय-प्रभाव -
मन्त-स्थितैक-नव-चेतनया हरन्तः ।
राष्ट्र-प्रबोधनधिया विविधसम्मेलेषु,
कार्यक्रमेषु ननु तेऽभिरता बभूवुः ॥

४८

निर्धारितेऽपि समये कलुषक्रियाणां,
गर्वप्रभावितधियाङ्ग्ल-शासकानाम् ।
साऽरण्यरोदनमभूदपि सञ्चिताशा,
प्रस्तावना विधिवशाज्जननायकानाम् ॥

४९

वर्षे गते विपुल-वारिधिवज्जनानां,
रावी-तटे शिशिर-शीतलित-प्रदेशः ।
उष्णत्वमाप नवशक्तिसमाहितेन
सङ्कल्पितेन महतामधिवेशनेन ॥

५०

तत्राधिवेशनमुपेत्य जनाः प्रधानं,
निर्वाच्य संसदि जवाहरमादरेण ।
स्वाधीनतामधिगतप्रभु - शक्तिमाप्तुं
संकल्पसञ्चितयतेन पुनर्विरेजुः ॥

५१

षड् विंशतिस्तिथिरियं भुवनाभिवन्द्या
जातेतिहास - रचना - रसिक - प्रसङ्गे,
यस्यां निखाय हृदि कीलमिवाङ्गलानां
स्वाधीनता - ध्वजमसौ गगने वितेने ॥

५२

स्वाधीनतादिवसपर्वणि तत्र हर्षात्,
स्वीकृत्य मुक्तहृदयेन पुनः प्रतिज्ञाम् ।
चक्रुर्विधेः सविनयप्रतिरोधमाज्ञा-
भङ्गं च भूमिकर-दानविरोधमार्याः ॥

५३

इत्थं पुनर्दमनचक्रतले विशान्ती
स्वाधीनताग्रहणदर्पितमानसानाम् ।
शक्तिः सतां कनकयष्टिरिवाग्निदाहे
भूयः प्रभापरिचय - प्रखरा बभूव ॥

५४

दर्पान्धबुद्धि-विवशाङ्गलशासनेन,
कारागृहं पुनरनायि जवाहरोऽपि ।
यद् देशदास्यदलने तपसाऽभिचेतुं
शक्तिं, बभूव नव साधनसिद्धिभूमिः ॥

५५

इदमभून्नहरूगृहमेधिनां,
चरितमेव तपोव्रतिनामिव ।
विषम - बन्दि गृहेष्वथवा गृहे
विपुल - राष्ट्रहितं परिचिन्तनम् ॥

इति नेहरूयशः सौरभे पञ्चमः सर्गः



# नेहरू-यशः-सौरभम्

## षष्ठः सर्गः

१

अतिदारुण-दुःख - दुःसहां,
सहमानो वपुषाऽपि यातनाम् ।
प्रभजज्-जरयार्दितो भृशं,
जनकः क्षीण - कलेवरो रुजम् ॥

२

पयसेव विनिर्मितं ततो,
जरया तस्य कलेवरं गदः ।
ग्रहणार्थमुपाक्रमच्छलात्
तमसा राहुरिवेन्दवीं द्युतिम् ॥

३

अवलोक्य तनुं महामते.,
सहसाऽसाध्यरुजा वशीकृताम् ।
अपि दारुण - दण्ड - भीषणा,
अजहु र्वन्दि-गृहात् - समाकुला ॥

४

ननु मातृभुव कृते सुतो,
विषम वन्दि - गृह समाश्रयत् ।
इह रोग - निपीडितः पिता,
कतमो वेद विधे र्विडम्बनाम् ? ॥

५

अलकेश्वर - सद्म - सन्निभे,
भवने-भव्य-विभूति भास्वरे ।
मुदमाप मनो न मानिनः,
सुत-बन्दी-गृह-वेदनाङ्कितम् ॥

६

कथमप्यधिशासकाज्ञया,
प्रति मुक्तो, भवनं जवाहरः ।
प्रहित पितरं व्यलोकयद्
मलिन चन्द्रमिव क्षपा - क्षये ॥

७

विवशः, शयितो रुजार्दित

शयने, देशहिते समर्पितः ।

मदमत्त - मतङ्गजान् बभौ,

विदलन् श्रान्त इवोग्रकेशरी ॥

८

पितरं परिवीक्ष्य वेदना,

सहसा व्याकुलमानसं सुतम् ।

अकरोदवशं महोर्मिलं,

विषमज्वार इवाम्भसां निधिम् ॥

९

स विलोक्य विपत्तिमागतां

परिखिन्नोऽपि जहौ न धीरताम् ।

न तिमिङ्गिल - पुच्छ - पातने,

भजति व्याकुलतां पयोनिधिः ॥

१०

अनयत् स, हि लक्ष्मणं पुरं,

पितरं व्याधिवशाच्चिकित्सितुम् ।

प्रतरन्ति सयत्नमर्णवं,

विपदां, धैर्यधना, न रोदनैः ॥

११

विधिना विहिते भिषग्वरैः,
निखिले व्याधिविनाशकोद्यमे ।
पितरं, ननु मृत्युरग्रही-
द्यकालो दुरतिक्रमो नृणाम् ॥

१२

चिरसञ्चित - भूरि - वैभवं,
प्रथमं राष्ट्रकृते समुत्सृजन् ।
ननु नश्वरदेहमप्यसौ,
धरणेश्वस्य यशोधनोऽर्पयत् ॥

१३

प्रति-शोक-समाकुलं कुलं,
नहरूणामभवन्न केवलम् ।
ननु भारत - मातृभूरपि,
व्यथया संरुरुदेऽश्रुभि र्भृशम् ॥

१४

जनकस्य वियोग-सागरं,
कथमप्येव ततार दुस्तरम् ।
वधिता-क्षय-रोग - भीषणं,
हृदये वज्रमिवापतत् पुनः ॥

१५

कठिने जनमुक्ति-सत्पथे,
विषमेऽप्यार्यसुतानुसारिणी ।
कमलाप्यबलाजन - प्रिया
प्रबलान्दोलनकारिकाऽभवत् ॥१५॥

१६

निज - देशविमोचन - व्रत
स्वजनैरेव सह, प्रबुद्धया ।
अबलाजन - जागृतिस्तया
विहिताऽऽन्दोलन-यज्ञ - विस्तया ॥

१७

कठिने प्रतिकार वर्त्मनि,
विषम-स्थान-नियोजित-क्रियाम् ।
प्रबलाङ्गलशासका स्वघु,
बहु ता वन्दि गृह - प्रवासिनीम ॥

१८

अबला-बलमुग्रमात्मनो,
हृदये सदधती दिधिषया ।
जननी - विषमार्गलामसा
वसपद् देहलतामलङ्कृताम् ॥

१६

समये विगते शनै शनैः
कमला कोमलकान्त-दर्शना ।
अधिश्वासकरोग - खण्डिता
नितरां क्षीण - कलेवराऽभवत् ॥

२०

स्वजनः पतिरन्यबान्धवो
विषमान्दोलन-दण्ड-बन्दिनः ।
समय नहि लेभिरे मना-
गनुसन्धातुमवाञ्छित-स्थितिम् ॥

२१

कठिन-श्रम-शक्ति-विक्षतं,
प्रतिरोध-क्षमतापवञ्चितम् ।
कल - काञ्चन - यष्टि - सुन्दरं,
भव-देह विदधे क्षयो गृहम् ॥

२२

विहिता समयेन यं क्रिया,
सुपसन्तीव महीरुहा ऋतौ ।
समयापगमे कृतिः सता,
भव एव प्रतिकार - निष्फला ॥

२३

प्रमिशं क्षय-रोग-राहुणा,
ग्रसिता चन्द्रमस प्रभेव सा ।
नलिनी मलिनेव घर्मणा
कमला क म चकार चिन्तितम् ॥

२४

नवनीत-मनोज-मन्दिरं,
सहज क्षीण-कलेवरं बभौ ।
जलसेचन - वञ्चितो यथा
तपने कोमल - बन्धु - जीवनम् ॥

२५

कमला क्षय - जर्जरीकृतां,
हरिणीं केशरिणेव मर्दिताम् ।
अवलोक्य जवाहर प्रिया
मवशो व्याकुल मानसोऽभवत् ॥

२६

निजराष्ट्र - विमोचने रत,
सहसा वीक्ष्य प्रिया विपद्गताम् ।
रण दुर्मद - वैरि - विग्रहे,
व्यथित पार्श्वहतो रथीव स ॥

२७

परिमोचयितुं मनोदधे,
दयितां रोगवशीकृतामसौ ।
करि - यूथपतिः प्रयत्नतः,
करिणीं पङ्कनिमज्जितामिव ॥

२८

स नयन् नयन - प्रभामिव,
गृहिणीमार्य-सखीं यशस्विनीम् ।
प्रययौ रुजमुत्प्रमर्दितुं,
'नहरुः' 'स्वीट्जरलैण्ड'—मेदिनीम् ॥

२९

नवजीवन सेचन-क्षमा,
प्रकृते रम्यकलास्थली मही -
हिमशीतल - सौम्य - वीजनै,
रमयन्ती जनमानसं बभौ ॥

३०

परितो हिमशुभ्र-सानुभि,
र्मधुरैः शीतलवारि-निर्भरैः ।
नवजीवन - दायिसञ्चरत्-
पवनैः पाययतीव मानवान् ॥

३१

मनसा च कलेवरेण यं,
ध्यथितान् विश्वजनान् यशस्विनी ।
जननीव निजाङ्कमागतान्,
कुरुते स्नेह - रसंगत-श्रमान् ॥

३२

अपि सञ्चित सर्व-साधना,
प्रकृति मंङ्गलदायिनी सदा ।
कृपणेव बभूव निष्ठुरा,
दयिता - जीवन रक्षणे भृशम् ॥

३३

करुणावरुणालयोऽप्यसौ,
जगदीशो दयनीय-दर्शने ।
न बभूव दयालुरुद्भव-
स्थिति-संहारकरो जवाहरे ॥

३४

विपरीत-विधौ सुधा-रसो,
विषवद्; मित्रमरित्वमाचरेत् ।
चलतीव मति, कृति. सतां,
कुरुते निष्फलमर्थ - दर्शनम् ॥

३५

अचिरादनुभूय जीवन—
प्रभव भोगमनन्त-वैभवम् ।
निजराष्ट्र - कृतेऽर्पिताऽप्यसौ,
प्रतिपेदे ह्यविनश्वर पदम् ॥

३६

विषमे जन - मुक्ति - वर्त्मनि,
प्रतिभा सम्बलमार्यकर्मण. ।
अहरन्नमु पश्यतोहर',
सहसा क्रूरविधि र्मनस्विन ॥

३७

जगतस्तिमिरापहारिणो,
नेहरू-वंश कलानिधे कलाम् ।
विधिराहुरसौ रुषाऽग्रहीत्,
सहसा लोक-विलोचन-प्रभाम् ॥

३८

अपहाय सुरेन्द्र-मन्दिर,
सुरकन्येव समागता महीम् ।
स्वगुणार्जित - सत्पथे यशो,
विकिरन्ती पुनरुद्ययौ दिवम् ॥

३९

जनदास्य कलङ्क - मोचन-
प्रतिनोप्यायं - पथानुवर्तिन ।
प्रतिमा विधिना विखण्डिता,
प्रतिभा बुद्धि - बलौजसामिव ॥

४०

पथिकान् जन मुक्ति-वर्त्मनि
प्रथयौ सदिशतीव साऽम्बरम् ।
ज्वलितं कथमाह - जीवन,
भणित वै चिर धूम-सञ्चयात् ॥

४१

कान्ता गात्र सकमरिरया मृत्युना मुक्तजीव-
मालिङ्ग्यान्तविकलमवश मोहमापद्यमान ।
श्रद्धापुष्प समरमुहूदे मुक्ति-सग्राम सोम्नि,
धन्य प्रीत्या करुण-मनस , सोऽर्पयत् साश्रु नेत्र ॥

इति नेहरूयश सौरभे षष्ठ सर्ग ।

# नेहरू-यशः-सौरभम्

## सप्तम् सर्गः

१

अर्धाङ्गिन्या वियोगेन,
व्याकुलोऽपि स धीरताम् ।
न जहौ वज्रपातेन,
गिरिराडिव गौरवम् ॥

२

भार्यां प्राणप्रियामार्यां,
विना जीवन - संगिनीम् ।
अभूदन्तर्व्यथापन्नः,
पक्षाहत इव द्विजः ॥

३

पुत्रीं मातृवियोगार्ता-
मेका मेकाकिनीमपि ।
विदेशं - प्रेषयद्बाला
मध्येतुं प्रियदर्शिनीम् ॥

४

स्थित - प्रज्ञत्वमापन्नो,
निर्ममः - सुखदुःखयो. ।
प्रणत प्रक्रियां भेजे,
योगिनामात्मदर्शिनाम् ॥

५

प्रकृति - प्रश्रयोपेता,
जीवन प्रक्रिया बुधान् ।
विबुद्धान् सम्पदा पदभि,
नंप्रमोहयति क्वचित् ॥

६

इन्द्रिय - व्यवसायेभ्यो
विषयेभ्यः पराङ्मुख ।
अकरोत् कर्मयोगीव,
निरीहो जीवन-क्रियाम् ॥

७

मनो-बुद्धि-वचः-प्राण-
शरीरश्रम - शक्तिभिः ।
तितिक्षुरिव चात्मानं,
चक्रेराष्ट्र - समर्पितम् ॥

८

साहसेन च धैर्येण,
शौर्येण परन्तपः ।
प्रबुद्ध - विचारेण,
जन - सम्मान - भाजनम् ॥

९

विदेशात् देशमागत्य,
दृष्ट्वा व्यग्र - मानसान् ।
युवकान् सर्वांस्त्यागी,
योगिवान् समबोधित ॥

१०

पराक्रमो विदेशेषु
सर्वत्र जन चेतनाम् ।
बभूव विलक्षणा शौर्य
स्वदेशे जन - गौरवम् ॥

११

अतः साम्राज्यवादेन,
घृणापन्न - व्यथाकुलः ।
राष्ट्रोद्धारं प्रति प्राप्तो,
बभूव व्यग्रमानसः ॥

१२

संस्थितो भारतीयानां
मतो मानस - मन्दिरे ।
दलाध्यक्षोऽभवद् भूयः
श्रेयसे देशवासिनाम् ॥

१३

राष्ट्रोद्धार - प्रवृत्तानां,
यूनां हृदय - नायकः ।
अभूदापन्न - सम्मानो,
विचारैरग्र - गामिभिः ॥

१४

विवेकशक्त्या सन्मार्गं,
दर्शयन् स्वानुयायिनः ।
अभूत् सर्वत्र सञ्चारि-
प्रकाश - स्तम्भ - सन्निभः ॥

१५

धारासभा - प्रवेशस्य,
निर्णयं कृतवानसौ ।
साध्ये दत्तधियो धीरा,
नैकस्त्यपत दर्शिनः ॥

१६

जवाहर प्रयासेन,
राष्ट्र-सेवा-समुद्यतान् ।
आङ्गलाशातुपस्रान् तान्,
जनता निरवाचयत् ॥

१७

सूत्र - धारेषु सर्वत्र,
राज्यपालेषु शासने ।
मन्त्रिणां परित्यज्जाता,
दारुयोषित् - समा तदा ॥

१८

आङ्गलाः शक्तिसम्पन्ना,
राज्यपालास्तु मन्त्रिणाम् ।
प्रयासं निष्फलीचक्रु-
रजीर्णे भोजनं यथा ॥

१९

द्वितीये विश्व - सग्रामे
राष्ट्रमाङ्गल[1] शासका ।
नियोज्य क्षोभयामासु,
जनता - मानसोदधिम् ॥

२०

धारा - सभागता सर्वे,
मन्त्रिणो निजमुद्यमम् ।
प्रमम्यन्ताऽऽङ्गलैरेव,
शासकै निष्फलीकृतम् ॥

२१

कारागारस्थ - वीराणां
मुक्तये मन्त्रिभि कृतं ।
आवेशैस्तीव्रतां यात,
॥ सघर्ष पुनराङ्गल ॥

२२

राज्यपाल - प्रभावेण,
प्रक्रिया मन्त्रिणामियम् ।
युक्त - प्रान्ते विहारेऽपि
। व्योम - पुण्यायिताऽभवत् ॥

२३

आलोच्य व्यर्थतां शक्ते,
मन्त्रिणः पदमत्यजन् ।
किं नाम महतामग्रे,
सम्मानादधिकं भवेत् ॥

२४

सत्याग्रहे पुनर्याते,
कारागारं जवाहरः ।
विरमन्ति न बाधाभिः,
साधवः साध्य - दर्शिनः ॥

२५

अन्येऽपि बहवो वन्द्या,
नेतारो बन्दिनोऽभवन् ।
त्यागोत्कर्षो हि संसारे,
मणयो यान्ति गौरवम् ॥

२६

दुर्जेयां शक्तिमाश्रित्य
जापानः सहसाऽऽक्रमत् ।
आरम्भाद्भूतपूर्वं,
साम्राज्यं पातयन्निव ॥

२७

पयस्यांश्चूर्णयन्तीवा
चरोधास्तस्य वाहिनी ।
साम्राज्यं क्षोभयामास,
चक्रवात्येव सागरम् ॥

२८

पूर्व - साम्राज्यदेशान् वं
पराजित्य प्रवेगतः ।
ब्रह्मदेशं समाक्रम्य
भारतं सास्पृशद यदा ॥

२९

जापान - प्रतिरोधार्थं
भारतीय - जनोद्यम ।
श्राङ्गलानां हितायासीद
मज्जतामुडुपो यथा ॥

३०

विख्यात स्वायसधाने,
प्रख्यात चर्चिलस्तदा ।
भारते सर्व वर्गाणा-
मभूत् सगठनोत्सुक ॥

३१

अतः सत्याग्रहे सर्वान्,
बन्दिनो राष्ट्र - नायकान् ।
विवशाः शासका वीरा-
नमुञ्चन् मुक्ति - सैनिकान् ॥

३२

शासकानां निदेशेन,
भारतं सान्त्वयन्निव ।
क्रिप्सायोगः समायातः,
संधातुं जन-नायकान् ॥

३३

राष्ट्र-स्वाधीनता हेतो.
प्रस्तावं स्वार्थ-सञ्चितम् ।
न स्वीचक्रुर्महात्मानो,
नेतारो दूरदर्शिनः ॥

३४

समीक्ष्य प्रस्तुतं तत्र,
क्रिप्सेनापि जवाहरः ।
मधुलिप्तमसौ मेने
प्रस्तावं विषमोदकम् ॥

३५

महायुद्ध - घनस्यन्दि - ...
स्वाति - बिन्दु - समाहिता ।
क्रिप्स - प्रस्तावना शुक्ति,
नाफलत् स्नेह मौक्तिकम् ॥

३६

छद्म - प्रस्तावितं सर्वं,
भारतीयैस्तिरस्कृतम् ।
बुभुक्षितैरपि स्वस्थैं
दूषितं भोजनं यथा ॥

३७

छल-प्रचारिता प्रीति,
सदा लोक विनाशिका ।
कालिमा-मालिका कापि
पिकाकालिक - काकलि ॥
(त्रिशूल पथ)

३८

क्रिप्स प्रस्तावना भङ्गा
दाङ्गलानां प्रतिक्रिया ।
असयत - वचो - छ्यपा,
भूतोन्मत्त - प्रलापना ॥

३९

जापानाक्रमणात् त्रस्ता,
अपि श्वेताङ्गशासकाः ।
न प्रदातुमुरीचक्रु,
र्भारतस्य प्रशासनम् ॥

४०

समन्तादुग्र - संघर्षं,
प्रतीकार - प्रवर्धितम् ।
जनरोषं विलोक्यासन्,
नेतारो व्यग्रमानसाः ॥

४१

'मुम्बई' नगराहूते,
कांग्रेसस्याधिवेशने ।
नेता गांधी जनानूचे,
राष्ट्रमुद्बोधयन्निव ॥
(चाप-बन्धः)

४२

आगतो भारतीयानां,
समयः सुप्रतीक्षितः ।
चिरात् पोषित - वृक्षाणां,
यथेप्सित - फलोदयः ॥

४३

धुनोतीव मनः सम्यक्,
स्वरोऽयं मेऽन्तरात्मनः ।
अन्तिमे राष्ट्र-संघर्षे,
युज्यतां युज्यतां जनं ॥

४४

चिरकालात् प्रयत्नेन,
शान्ति-संग्राम-सञ्चिताम् ।
अहिंसा - शक्तिमाश्रित्य,
संघर्षे विनियुज्यताम् ॥

४५

यदि चेन्न प्रयच्छन्ति,
शासका राष्ट्र - शासनम् ।
स्वाधिकाराय युद्ध्यध्व-
मद्विषन्तोऽप्यहिंसया ॥

४६

'निष्फलीकर्तुं मुद्विग्नाः,
शासकाः प्रस्तुत-क्रियाम् ।
अकुर्वन् बन्दिनो वीरान्,
निशायां राष्ट्र-नायकान् ॥

४७

जवाहरोऽपि सहसा,
निशायामेव, शासकैः ।
गृहीत्वा प्रहितो दुर्गं,
दक्षिणाऽहमदे - पुरे ॥

४८

जनता मानसोद्वेग,
सद्धोऽसावहिंसया ।
दण्ड - नीति - प्रहारेण,
भग्नो दुष्टं प्रशासनं ॥

४९

गौरया राष्ट्रद्विषां शक्ति
वीराणां शान्ति लिप्सया ।
ताडिता सहस्रोत्तरणो,
वणिग्देवारि - मर्दिनो ॥

५०

साम्राज्यस्य जने क्रुद्धे,
रणचण्डी प्रसारिता ।
ताण्डवं कुर्वती चारे,
शत्रूणां शोणितार्पणम् ॥

५१

पथ - प्रदर्शनाभावे,
लोकः सन्मार्ग वञ्चितः ।
मनस्स्वाधीनतां त्यक्त्वा
भेजे, स्वाधीनता-पथम् ॥

५२

धारयन्तो महद् धैर्य-
मोजसा साहसान्विताः ।
दासता-तामसावार्यां,
मुक्तये येतिरे भृशम् ॥

५३

मुञ्च भारतमुद्घोषं,
घोषयन्तः समन्ततः ।
आहरन् परितः क्रुद्धा,
जना जीर्णं प्रशासनम् ॥

५४

ओपयन् परितो देश-
मतो लोकः प्रशासनम् ।
नन्दयन् मातरं तीव्र-
शक्तिरूपां विचक्रमे ॥

५५

सञ्चार - साधनाऽऽरक्षा-
प्रतिष्ठान - गृहाण्यपि ।
अभूवन् नष्ट - हव्यानि,
जनरोषाम्बरानले ॥

५६

दीप्तं स्वाधीनता-दीपं
राष्ट्रस्नेह - परिप्लुतम् ।
वीराः शलभतामापु -
रालिङ्ग्य सहस्रशः ॥

५७

प्राप्तोपता विभव-धर्म-कुल -प्रतिष्ठा-
नैदं विहाय जननीमिव जन्म - भूमिम् ।
सम्पूज्य, जीव-कुसुमाञ्जलिभि सहर्षं,
स्वाधीनता - व्रतमनुष्ठितमार्य - वीरैः ॥

५८

क्रान्ति-प्रशासशमने खलु शासकानां,
हिंसार्ति वितनुते स्म नवोपलब्धिम् ।
दीप्तानसप्रशमनाय कृताऽविवेका—
राज्याहुति ज्वलनमुज्ज्वलितं करोति ॥

५९

जाता मनस्विजन-शौर्य समर्चिताङ्का,
रक्ताभिषेक - रचिता नव-राष्ट्र-तीर्था ।
प्राणाहुति क्रतुभिराप्तयशा जनौघो,
यत्राजुहोन्निखिलमार्यभुवस्तु दास्यम् ॥

६०

धीराणां रणनीति-राष्ट्ररचना-त्याग-प्रसङ्गो महान्
लोकालोक-विवेक-बोधनपथ-प्रस्थान-बाधा सताम् ।
मातुर्दास्य-विमुक्ति-बद्धवचन-व्यग्रात्मनां भावना-
प्युन्मादप्रशमेन साधंमखिलं सिद्धं विदेशि-प्रभो ॥

इति नेहरूयशः सौरभे सप्तम सर्गः ।

---



# नेहरू-यशः-सौरभम्

## अष्टमः सर्गः

१

असंख्य-जीवानुदरे निवेश्य
 काले यदा तृप्तिमुपाजगाम।
 तदा महाविश्वविनाश - युद्धो-
 -न्माद शशामाप्यधिनायकानाम् ॥

२

ध्वस्तोऽणुविस्फोट-वशाद् विपन्नो,
 'जापान' देश सहसा पपात।
 व्यादाय कालो मुखमट्टहासं,
 यंत्र स्थितां मानवतामलीढ ॥

३

स 'हिट्लरः' क्रूरतमोऽधिनेता
युद्धानले विश्व-जनान् प्रहित्य ।
ध्वसावशेषेषु यथा विलीन्,
इचान्ते, कथा सर्वगता धरण्याम् ॥

४

श्रान्त रणाद् विश्वमतं समन्तान्-
न केवलं शान्तिपर बभूव । ,
समर्थयामास विदेशि-वास्याद्,
विमुक्ति - संघर्षमपि प्रजानाम् ॥

५

पराजयाच्चर्चिल' - शासनस्य,
निर्वाचनेन श्रमजीविनां वै ।
प्रशासनं विश्वमतानुरूपं,
ब्रिटेन - देशस्य पद प्रपेदे ॥

६

स्वजन्मभूमेः परतन्त्रतायां,
शान्तिः कथं स्यादिति संविचार्य ।
प्रशासकं भारतनायकानां,
मुक्ति -प्रसंगो विहितस्तदानीम् ॥

७

चन्दीगृहादेत्य बहिर्वदान्यो,
जवाहरो हर्षित मानसानाम् ।
अभूत्तदाऽऽनन्दकरो जनाना-
ममालये क्षीण-तनुर्यथेन्दुः ॥

८

प्राप्तुं प्रयेते पुनरीप्सितानि,
स्वाधीन - देशोचितमङ्गलानि ।
विपत्ति-बाधा-विहतान्यपीष्ट-
कार्याणि धीरा न परित्यजन्ति ॥

९

संधारिते संसदि शासकानां
विधेयके भारत-वास्यमुक्तैः ।
प्रतिक्रियाभूदभिनन्दनीया,
क्रिया सती विश्वमनोभिरामा ॥

१०

यदा स्वदेशे जनमुक्तिहेतो,
र्नेतार आसन् परितो निमग्नाः ।
आसीत् तदा धर्म-विरोध-वृद्धि-
[illegible]व्यस्तं दलं 'मुस्लिम-लीग' नाम ॥

११

इस्लाम हिन्दु - द्वयमार्यधर्मं
राष्ट्र-द्वये भिन्नमतं जनेषु ।
उद्घोषयन् मुस्लिमलीग-नेता,
विभाजनं मातृभुवो ययाचे ॥

१२

धर्मो धरायां जनमानसानां,
भवेत् सदा जीवन-दर्शनाय ।
प्रभूदसौ 'मुस्लिम लीग'-दृष्ट्या,
राष्ट्रीयतायाः प्रथमं प्रतीकं ॥

१३

प्रशासका यत्नपरा अपीमां
निरंकुशां 'मुस्लिम लीग' कृत्याम् ।
धर्मान्धहिंसा - व्यभिचार-दक्षां—
महो वशीकर्तुमिमे न शेकुः ॥

१४

तदाकुले संसदि शासकानां
प्रस्तावितेनैव विभाजनेन ।
राष्ट्रीयता , संस्कृतिरार्यभूमेः,
विखण्डिता आनमत-सम्मितापि ॥

१५

विखण्डितायां निज-मातृ-भूमौ,
बभूव सद्यः स्वगृहं विदेशः।
यतो हि धर्म-व्यवहार-शून्याः,
क्रूरा व्यधु बंन्धु-जनेषु हिंसाम्॥

१६

अभूत् सतीत्वापहृति, जनानां,
भू-सम्पदा - मानधनापहारः।
विभाजनाय प्रियमातृभूमेः,
पिशाच-बुद्धिः सहसावतीर्णा॥

१७

धर्मान्ध-लोकैरभिताडितोऽन्तः-
पीडां दधानोऽल्पमतो जनौघः।
उपार्जितं पितृजनैः स्वगेहं,
त्यक्तुं समन्ताद् विवशो बभूव॥

१८

त्यक्त्वा धरां, धाम-धनानि, धीरा
धैर्यं समालम्ब्य, जना विपन्नाः।
वियोग-तप्ता निज - बान्धवानां,
भयादभूवन् शरणार्थिनो, हा!॥

१९

स्वाधीनता-सागर मन्थनोत्थं,
जातीय विद्वेषविषं करालम् ।
बङ्गस्य, यं पञ्चनदस्य सिन्धो ,
पपुर्जना मुक्ति सुधारसार्थम् ॥

२०

निपाय नेहे चिरमित्र-भेद,
विधाय राष्ट्रं विकृताङ्गभङ्गम् ।
मुमोच या द्वेष - विषाग्निकाञ्ही,
नीनिर्दुं रक्ताऽऽकुल-शासकानाम् ॥

२१

पयोधि-वर्णं ग्रह-भूमि वर्षे
शिष्टे च भारतेन्दु - तिथावमस्ते ।
ध्वान्तं विहाय स्फुटितो निशीथे,
स्वाधीनता-स्वर्णमय प्रकाश ॥

२२

महोत्सवे भारत-राजधान्या
जवाहरो धुर्यतमस्तदानीम् ।
देश-प्रतिष्ठा पुनरर्शिनीषु ,
प्रधान-मन्त्रित्वपद प्रपेदे ॥

२३

दास्य-प्रतीक, ध्वजमाङ्गलाना
देशे पसार्यास्तमित प्रभावम् ।
स्वाधीनता - सूर्यमिवोदयन्त,
राष्ट्रध्वज धन्यतमो - वितेने ॥

२४

राष्ट्रध्वज लालकिले'ति दुर्गे
समुन्नयन् देशजनानुपेतान् ।
प्रधानमन्त्री नव-राष्ट्र - भक्ति,
समृद्धिमैक्य च बल ययाचे ॥

२५

सम्बोधयन् राष्ट्रमसौ मनस्वी
श्रद्धाञ्जलि भारत भू जनेभ्य ।
समर्पयामास समानमार्य
स्वातन्त्र्य यज्ञज्वलने हुतेभ्य ॥

२६

"सदाभिवन्द्या अमरा इवैते,
महानुभावा पुरुषा धरण्याम् ।
येषां चिर रक्तकृताभिषेका,
स्वाधीनतामद्यजना अवापु

२७

ते चापि वन्द्या नितरां कठोरं,
दण्डैरभीताः खलु शासकानाम् ।
दास्यं जनन्या परिहर्तु-कामा,
ये प्राहरन् शासनमाङ्गलानाम् ॥

२८

सत्याग्रहं, सत्यपथं, मनस्वी,
जनानहिंसामुपदिश्य लोके ।
यो भारते दास्य-तमो जहार
नुमो हि तं 'मोहनदास'-चन्द्रम् ॥

२९

मदद्य सन्तापशतैरवाप्तं,
स्वाधीनता-रत्नमिदं दुरापम् ।
निरन्तरं शक्ति - समुच्चयेन,
श्रमेण तच्चापि सुरक्षणीयम् ॥

३०

अहिंसया सत्यपथं वजद्भिः,
मदैवयमार्येरुपपादितं तत् ।
खात्नीय:- विद्वेष-विषानुलिप्ता
हिंसा कथङ्कारमपाहरेद् वं ? ॥

३१

विहाय भेदं, बहुधर्मजाति
प्रसूतमार्या निजमातृभूमेः ।
चिर प्रतीक्षार्जितमुक्ति सिद्धे
समुद्यता स्यु परिरक्षणाय ॥

३२

प्रशासन भारतवर्ष रक्षा-
विधानदक्ष भविता तथैव ।
प्रबुद्ध-लोका स्वविवेक शक्त्याऽ
न्योऽन्य यदालम्बनतत्परा स्यु ॥"

३३

करं समन्तात् करताल-तुल्यं,
जंयस्वनैरेव सहोद्यतैस्ते ।
प्रधानमन्त्रि - प्रतिपादितां तां,
समर्थयामासुरिव प्रतिज्ञाम् ॥

३४

सर्वत्र, देशे नव-राष्ट्र-सूर्यो-
दयप्रभा-मण्डल-मण्डितानाम् ।
मन सरोजानि विकासमापु ,
स्वाधीनतामोदजुषां जनानाम् ॥

३५

मनोहरैः पुष्पलतावितानै-
रलङ्कृतं मङ्गलतोरणाद्यैः।
ध्वपुर्जनाः स्वागतमुत्पताकैः,
स्वाधीनताया बहुशोऽर्चिताया. ॥

३६

निकेतनान्युन्नत-केतनानि,
द्वाराणि पुष्पावलि-सज्जितानि।
जनार्णवज्वार - भराणि रेजुः,
रम्याणि वै भारतराजधान्याम् ॥

३७

आबाल-वृद्धा प्रमदा, मनुष्या-
ग्रामे च देशे नगरे प्रसन्नाः।
जय-स्वनैर्दिग्गज-कर्णकुम्भा-
नापूरयन्तो विजह्रु र्गृहाणि ॥

३८

घनस्वना उल्लसिताः समन्ता-
दम्भः - कणं मङ्गलमुत्किरन्तः।
वर्षाघना. स्वागतमाहुरुच्चैः,
स्वाधीनता-पर्वणि पुण्यभूमेः ॥

३९

दहन् सुगन्धि, नव गन्धवाह-
मर्ताङ्कितान्त करणो जनानाम् ।
मन्द विसर्पन्नकरोदमन्द-
मानन्दमुल्लास-रस-प्लुतानाम् ॥

४०

प्रसन्नतोया यमुना प्रफुल्ला-
रविन्दनेत्रा विहगस्वरेण ।
स्वाधीनतामोदमुदीरयन्ती,
तरङ्गभङ्गं रिव नृत्यति स्म ॥

४१

विद्युद्वितान - प्रचुरप्रकाश-
प्रभाविता ध्वान्तमयी निशाऽभूत् ।
क्वचिद्विलीना, ननु कौशिकानां
निद्रावमान - व्यवधान - हेतु ॥

४२

प्रकाश - पुञ्जेन परिष्कृतानि,
हर्म्याणि रेजु नवसज्जितानि ।
तत्रागतानामिव देवतानां,
यानानि दिव्य प्रभया चितानि ॥

४३

विद्युद्भिरालोकित-राजधानी
बिम्बं बभौ वारि कलिन्दजायाः ।
विद्योतिता नीलमणि - प्रभाभिः,
पुरी बलेरुत्सवमागतेव ॥

४४

साहित्य-संगीत रस प्रवाहे,
निमज्जनानन्दित-मानसानाम् ।
श्रान्ताव रात्रि दिवसाः व्यरंसो
दुल्लासमलास्योद्यत मानवानाम् ॥

४५

आकाशो मेघजालैः धरणिरभिनवैरङ्कुरैरञ्चिताऽभौ
गन्धाढ्योऽम्भः कणाढ्यः सरसजनमनो मोदयन् वाति वातः ।
लोकश्चामोदमत्तः पिबति रसमयं हर्षनाश्वसारं
देशः स्वाधीनतायाः विजयरसभरं स्वागतं व्याजहार ॥

इति नेहरूयशः सौरभे अष्टम सर्गः ।



# नेहरू-यशः-सौरभम्

## नवमः सर्गः

१

समुद्धरन्, शासनसूत्रमाञ्जले-
विपन्नमाशोषण-जर्जरीकृतम् ।
स्वदेशं देश ननु पश्यतो हरेः,
प्रवञ्चित सून-समग्र-साधनम् ॥

२

वसुन्धरा या सुधयाभिसिञ्चिता,
सदान्नपूर्णा, नवशस्य - शोभना ।
सुदीर्घ-दास्येन जनैरुपेक्षिता,
ह्यभूदसौ भाग्यवशादनुर्वरा ॥

३

विदेशि-दास्य-प्रभवां दरिद्रता
मथ स्वदेशादपनेतुमिच्छता ।
अनेन कमण्यधिकार दर्शिना,
कृत विकासोन्मुखमस्य शासनम ॥

४

विलोपय-दासत्व निशां बहिष्कृता
स्वतन्त्रता भास्करमुद्यत ततः ।
सरोज लक्ष्मीरिव देश-सम्पदा,
स्वयं विकासो-मुखतामुपागता ॥

५

स संविधान, जनमङ्गलप्रद,
नव-प्रजातन्त्र पथ-प्रदर्शकम् ।
अकारयद् भव्यमुदार - दर्शनं,
समन्वयन् विश्वविधि मनीषिभि ॥

६

स लोकनिर्वाचितशासन-क्रियां,
सभासु सम्यक् प्रविभज्य पञ्चसु ।
स्वदेश—भाग्योदयदर्शनाय वै,
चकार सोपानमिव प्रशासने ॥

७

विलोकयन् मत्स्य-नय प्रभावितान्,
समस्त राष्ट्रान भुवने नवोदितान् ।
समेत्य बाडुङ्ग-सभामुपादिशज-
जनान् सहास्तित्व-शुभावनामसौ ॥

८

निरन्तर स्वार्थवशाद विभाजितान्,
विलोक्य देशान् ननु वर्ग वर्त्मिन ।
नयप्रसौ मध्यगतेन वर्त्मना,
स्वदेशमार्गो निरपेक्षतां व्यधौ ॥

९

अचिन्तयित्वा निज-पूर्ववासता-
मुपेक्ष्य, देश-प्रतिमा-विखण्डनम् ।
सवस्यतां राष्ट्रकुलस्यसोऽग्रहीत्,
क्षमा सतामुच्चगुणाग्रवर्तिनी ॥

१०

रणोत्तर विश्व-हित-प्रदर्शकं
स राष्ट्रसंघं बहुशो विमर्शयन् ।
सदस्यमुत्यान-पथ-स्थितं व्यधात्
स्वदेशमार्गो सहयोगिन सताम् ॥

११

स जातिवर्णाग्रहमुक्तमुद्धतं
प्रशासनं लोक हिताय सददौ ।
समाज-संकल्पित साम्य-भावनां
पुपोष, कुर्वन् दलिते दयामसौ ॥

१२

नदी-जलौघाननिशं समुद्धतान्,
बबन्ध विध्वस-दिशा-निदेशकान् ।
न केवलं ये कृषि-सेचन-क्षमा
बभूवु रेते जनकास्तु विद्युताम् ॥

१३

नियन्त्रितेनैव जलेन,विद्युता,
स राष्ट्र-शक्तिः प्रसरत्वमागता ।
जना अवापुः श्रियमुत्तमाश्रयां
धरा बभूवे नव शस्य-शोभिता ॥

१४

यशोधनोऽज्ञानमहानिशातमो,
विनाश्य विज्ञान-सुधाकरेण सः ।
विधाय विद्यासदनान्यजीजनत्
जनेषु वै जन्मजुषामभिज्ञताम् ।

१५

पदस्पृशत्वं दलितेषु, च प्रभु-
स्त्वगात् कुलीनत्वमनन्य-जन्मसु ।
व्यधात् तयोरैक्यमसौ समन्वयन्,
समानतां सर्वजनेषु कर्मसु ॥

१६

धरा-परिष्कार-कृते समर्पिता-
नथान्नमुत्पादयितुं कृत-श्रमान् ।
निरन्तरं शोषण - जर्जरी - कृतान्
व्यधादसौ भूमिधरान् धरासुतान् ॥

१७

प्रशासनेऽस्य, श्रमिका निरन्तरं,
समाजकल्याण-विधि-व्यवस्थिताम् ।
अवाप्य सम्यक् श्रम-नीतिमुद्यमं,
रुपार्जयन् भारतराष्ट्रसम्पदाम् ॥

१८

अयाचित-स्नेह सुधारसप्रदा-
नकृत्रिमाधारित-जीवनक्रमान् ।
कदर्थितान् ग्राम्यजनान् महाशयः,
पुनः समुन्नेतुमसौ मनो दधे ॥

१९

प्रसार-सेवा-नव-दीपक-प्रभा-
प्रकाशित-ग्राम-विकास-वर्त्मना ।
स्वदेश-निर्माणकृते कृतश्रमा
जना अभूवन् निरता नियोजने ॥

२०

कृषिप्रसारोद्यम कर्मवारिणा,
समाज-कल्याण-समत्व शिल्पिनाम् ।
गृहे गृहे सत्यशिवत्व-दर्शिना-
मपूज्जना नां नव—जीवनोदय ॥

२१

न केवल ग्रामपथेन विद्युता,
नवोदितेनैव जनस्य जीवनम् ।
गृहे गृहे साक्षरताविकासत,
प्रकाशितं चाप्यभवद् दिवानिशम् ॥

२२

अपाणवीं शक्तिमसौ विनाशिनीं,
नियोज्य वै लोक-हित प्रसाधने ।
स्वदेश-निर्माणविधौ वसुन्धरा
मुपादिशच्छान्ति-पथ महोदयः ॥

२३

अमुं स्त्रियो नूतन-जीवनोदय-
प्रभातसूर्यप्रतिमानमर्चितम् ।
जनेष्वम-यन्त महामनस्विनं,
समानता-मान-मताधिकारदम् ॥

२४

प्रफुल्लितान् जीवनपुष्प-वाटिका-
प्रसून-कल्पान् प्रियबालकानसौ ।
अमन्दमानन्दकरानमन्यत,
नवाङ्कुरान् राष्ट्रभविष्यजीवनान् ॥

२५

उदारचेता निज-देश-बालकान्,
प्रदर्शयन् स्नेहमगाधया धिया ।
स्व - जन्मनोवासरमुन्नताशयो:
द रोदसी 'बालदिनं' महोत्सवम् ॥

२६

स भारताङ्गत्वयमुग्रशासना-
दमोचयद् राहुमुखादिव द्विजम् ।
स्वभाव-नम्रा, अपि नाम मानिनो,
भवन्ति सकल्प-कठोर-मानसाः ॥

२७

विभाजनानन्तरमेव लुण्ठका,
विलङ्घ्य काश्मीर-धरां दुरासदाम् ।
निपीडयन्तो जनमानसं यदा-
ऽतताथिनोऽराजकतां वितेनिरे ॥

२८

तदैव काश्मीरवसुन्धरापते-
र्निशम्य संदेशमुदारवत्सलः ।
प्रहित्य सैन्यं समयेन पावनी
ररक्ष रक्षोभ्य इवाशु जानकीम् ॥

२९

कठोर धर्मान्ध-जनै निपीडिता-
नतो निशम्यान्ध्र निरीहमानवान् ।
अमोघयज्जीवनमार्पयन्नतो-
निपातयन्नत्र 'निजाम'-शासनम् ॥

३०

यशोऽस्य, किन्तु प्रगत, स्वतन्त्रता-
प्रसारमुद्घोष्य जनानबोधयत् ।
यतश्चिरादस्य-निबद्धचेतसा-
अपि व्यतीयाय निशा कृशात्मनाम् ॥

३१

शनैः शनैरस्य चरित्रचन्द्रिका-
प्रभाभिरासाद्य पथ - प्रदर्शनम् ।
जना स्वदेशानपि दास्यपङ्किला-
नमोचयन्नाङ्गलशासनाद् भुवि ॥

३२

प्रतिष्ठितं गौरव मार्यसंस्कृते -
र्विखण्डितं मन्दिरमुद्धरन्निह ।
न सोमनाथस्य चकार केवलं,
नवप्रतिष्ठां स्वकुलस्य चाप्यसौ ॥

३३

धरा, प्रसन्ना, सुपुवेऽन्नसम्पदां,
ववर्षु रम्भः, समयेन वारिदाः ।
महन् यश - सौरभमस्य पावनं
जगाम मन्ये पवनः कृतार्थताम् ॥

३४

विदेश-यात्रासु विवेक-वर्त्मना,
निबोधयन्, जीवन-दर्शनं जनान् ।
असौ मनस्वी नव विश्व-शान्तये,
प्रचार सत्यं जगति प्रतिष्ठितम् ॥

३५

गुणैरुदारैः सकलामसौ महीं,
हिमांशुगौरैः परितः प्रसादयन् ।
गृहीत-सत्यव्रत-शक्ति - सद्गुरो,
धुरं दधौ धर्मसुतस्य भारते ॥

३६

समूलमुन्मूलयितुं प्रतापवान्,
कृतप्रतिज्ञो धरणीतलादसौ ।
दुरन्तदुःशासनमुद्धतं भृशं-
सदानुषक्तो महसार्जुनाग्रजः ॥

३७

अभूदसौ तत्पुरुषो यदीहया
जनस्तु नित्यं द्वन्द्वमपि द्विगुर्भवन् ।
यथाव्ययीभावितकर्म सारयन्
ययौ बहुव्रीहि पुनः कृतार्थताम् ॥

३८

खरं जनस्यानगतं विनाशयन्,
महोदयो दूषणमुग्रशासनम् ।
अवञ्चितो हेमकुरङ्गतृष्णया-
ऽप्यनङ्गदोऽगादतिरामतामसौ ॥

३९

स राजनीति-प्रीतिभाभिरुन्नतं
यथाऽकरोद्देशमुदारशासनः ।
तथैव साहित्य निधिर्विपश्चितः
समृद्धिशीलं जन-मानसं व्यधात् ॥

४०

कीर्तिर्यस्य दिगन्तरालवलये चन्द्रोदयानन्दिनी,
वाणी निर्झरिणी सुधारसमयी सौजन्यसञ्चारिणी ।
बुद्धिर्विश्व विवेक बोधनविधौ, सद्धर्म सौदामिनी,
तस्यैकत्व-निबद्धराष्ट्रविभवस्यासीत् कृतज्ञाधरा ॥

इति नेहरूयशःसौरभे समाप्तोऽयं नवमः सर्गः ।

# नेहरू-यशः-सौरभम्

## दशमः सर्गः

१

इः भावसौम्यप्रतिभाप्रसूता
मैत्रीमुवार्ता अननायकस्य ।
चक्रे कलङ्काङ्कितनामधेयां
चीनश्चरित्रेण विगर्हितेन ॥

२

स वर्गसंघर्षवशाद् विपन्नो,
संरिद्रतातान्डव - नर्तनेन ।
प्राचीन राष्ट्रे नवशासकानां,
पाशेन बद्धः पिशुनत्वमाप ॥

३

प्रच्छन्नसाम्राज्यसखाः समन्तात्,
प्रदर्शयन्तः किल भ्रातृभावम् ।
त्रिविष्टप बौद्धमतानुयायि-
प्रदेशमेते लिलिहुः प्रसह्य ॥

४

बुद्धावतार-प्रतिमान-मान्यो,
'दलाइलामा' जननायकोऽस्य ।
विहाय तां पुण्यधरामधीरः,
सहानुगैर्भारतमाविवेश ॥

५

सहोदर - स्नेहमुदारदर्शी,
प्रदर्शयन् स्वागतमातिथेयम् ।
विपन्नराष्ट्राधिपतिं मनस्वी,
जवाहरः सादरमानिनाय ॥

६

न केवलं शासनसूत्रधारैः
समस्त देशेषु जनैरुदारैः ।
परिश्रमेऽस्य दयार्द्रभावं,
प्रशंसितं विश्वमतानुरूपम् ॥

७

सतामुदारा प्रकृतिः खलानां,
कृते सदाभूदुपतापहेतुः ।
सहस्रकरो विश्वतमोऽपहारी,
नोलूकचेतः प्रमुदं करोति ॥

८

चीनस्तदा गुप्तगतिच्छलेन,
मार्गं विनिर्माय हिमाद्रिभूमौ ।
उवाप बीजं चिरविग्रहस्य,
पुण्ये प्रदेशे ननु भारतस्य ॥

९

न केवलं भारत-भूधराणा-
मधित्यकां शत्रुगणा महापुः ।
छलोपनीतैर्निशितैर्निकरस्ते,
प्राणानपि प्रा तनिरोऽधिकारिणाम् ॥

१०

विवेकविध्वंसनिरङ्कुशस्य
चीनप्रजाया अधिनायकस्य ।
राष्ट्रं सहास्तित्वसमेधमानं
विनिन्दितं कृत्यमसत्तमस्य ॥

११

विश्वासघातेन समेत्य शक्त्या
शत्रुः समाक्रान्तुमनाः स्वदेशम् ।
प्रगम्यशृङ्गं सहसा हिमाद्रि
समुद्यतो लङ्घयितुं प्रयेते ॥

१२

सेनाभिराजो विविधायुधाभि-
रसौ समन्तात् प्रहरन् प्रसह्य ।
उद्वेलयामास तया हि युद्ध-
ज्वारेण वै भारतशान्तसिन्धुम ॥

१३

यस्येन्दु-रश्मिच्छुरिता हिमानी
मणिप्रभा - तारकितेव रात्री ।
मनोहरन्ती दिवि देवताना-
माकाशगङ्गा - समतामुपैति ॥

१४

भयातपत्रस्तजना यदङ्के,
गता लभन्ते चिरमात्म शान्तिम् ।
शिवाश्रयं वीरवरा हिमाद्रिं,
त्रातुं प्रयाता सह साहसेन ॥

१५

महौजसो दुर्गम - कन्दरेषु,
तदा हिमाच्छादित - पर्वतेषु,
स्वदेश - रक्षार्यतिनो वरेण्या,
वीरा बभूवुरिपुसम्मुखीना ॥

१६

हिमाङ्क-शैत्य-प्रतिपन्न-जाड्य-
प्रभावितं यत्र जलं नदीनाम् ।
तत्रापि देश - प्रतिरक्षकाणा-
मुष्णत्वमाप्नोद् रुधिर-प्रवाहः ॥

१७

पदे-पदे शत्रु - समूहमुग्रैः,
शस्त्रैः समन्ताद् विनिपातयन्तः ।
प्रसादयामासुरिबोग्र-चण्डीं,
हिमालये रक्तबलि-प्रदानैः ॥

१८

इतस्ततो विक्षत-सैनिकानां,
प्रगाढरक्तारुणितो हिमाद्रिः ।
मन्ये, विसंज्ञः पतितो धरायां,
शराहतो मानस - राज हंसः ॥

१९

निपीय यस्यामृतसारमम्भो,
वसुन्धरा यानजनि प्रवीरान् ।
स एव रक्तै रभिषिच्य सस्य-
श्रृङ्गानभूवन् भुवने कृतार्थाः ॥

२०

त्रिशूलमाहर्तुं मना मदारिः,
समाक्रमत् सैन्यबलेन भूयः ।
महौजस शौर्यधना महाजौ,
पराक्रमन्ते स्म तदाद्वितीयम् ॥

२१

करालकाल - प्रतिमानमुग्रं,
मन्ये समादाय शिवस्त्रिशूलम् ।
स्वाविर्भवन् वीर - हृदि प्रदेशे,
ररक्ष शौर्यायतन त्रिशूलम् ॥

२२

ते लोहितं लोहितधारयैव,
विधाय वीरा ननु रक्तवर्णम् ।
पूर्वाञ्चलं पावनमातृभूमे-
स्तन्मामतार्थवदशामनैषुः ॥

२३

सम्मानमार्यव्रतनिष्ठितानां,
शौर्यं समुद्दीप्रमिवाप्रजानाम् ।
राष्ट्रप्रतिष्ठां, महनीयकीर्तिं,
प्राणैं रणे धन्यतमा ररक्षुः ॥

२४

विभिन्नभाषा - गुणधर्मदीक्षा-
प्रभाविताचार चरित्रभूपान् ।
सर्वान् समाबद्धममत्व-सूत्रे,
चीनः समाक्रम्य चमच्चकार ॥

२५

आबाल - वृद्धा, धनिनो, दरिद्रा,
विज्ञान-दक्षाः श्रमजीविनश्च ।
आवाहनादेव जवाहरस्य,
बभूविरे राष्ट्रसमर्पितास्ते ॥

२६

रत्नानि, हेमाभरणानि देशे,
वासांसि वै जीवन-साधनानि ।
सर्वं समन्तान्निज-राष्ट्ररक्षा-
कोषे यथाशक्ति, ददुर्धनानि ॥

२७

यानि स्मरः स्त्री-तनु-कार्मुकेषु,
मौर्वीमिवारोप्य जगद् धुनोति-
राष्ट्र-प्रतिष्ठा-परिकल्पने ता-
न्याभूषणानि प्रजहुस्तरुण्यः ॥

२८

स्वाधीनता - जागरणेऽपि देशे,
या शक्तिरासीद् - समुपेक्षितेव ।
बभूव चीनाक्रमणेन सद्यः,
कृतोपकारेव समुद्यता सा ॥

२९

सज्जीकृता नव्यतमैः महास्त्रैः,
सेना प्रहार-प्रतिरोध-दक्षा ।
न केवलं भारत - गौरवाय,
ह्यभूवन शत्रु - विनाशनाय ॥

३०

विहीय यशो जनघेरतरङ्गान्,
विमर्दयन्तो जय गंग - घोषाः ।
[illegible] जैत्रसुदुष्टान्,
विभोषयन्तो ह्यपसारयन्ति ॥

२१

हस्तेतमात्रेण रिपु-प्रतिष्ठा-
मुग्रप्रहारैः विनिपातयद्भिः ।
पतिस्यन्ते युद्धक्वायुधानैं
नभः स्पृशत्युद्यतवायुसेना ॥

२२

रमोघदास्त्रैः रभिसन्निविष्टा,
विश्वप्रतिष्ठां प्रतिपद्यमाना ।
हिमाद्रिश्रृङ्गेषु बलं महस्तो,
विमानमत्युद्धतमग्रिसेना ॥

२३

रक्षा-प्रतिष्ठान-विनिर्मितानि,
नव्यानि शस्त्राणि परिष्कृतानि ।
सतर्कदृष्ट्या परिवीक्षयन्ति
शत्रूनमुखानीव समुद्यतानि ॥

२४

शत्रुञ्जयं जयति राष्ट्रममुं विधातु
मृत्युञ्जया रणगता प्रभवन् युवानः ।
येषामतुल्यबल-साहस धैर्यदीप्तं
शुभ्र यशो दशदिशो विमलीकरोति ॥

३५

शौर्यप्रसारनव-चण्डकरोदयेन
वैशस्तरङ्गवति विश्वसरोवरेऽस्मौ।
सौन्दर्य सत्य शिव शान्ति सम प्रतीक
सद्य प्रफुल्लमरविन्दमिवाधिरेजे ॥

३६

शक्ति प्रभापरिगतो नवराष्ट्रचन्द्रो
विश्वक किरन् जगति शान्तिसुधाप्रकाशम्।
सौम्ये जवाहरशरत् समये सुपर्वे,
पूर्णत्वमाप सकलाभिरसौ कलाभि ॥

३७

भूयो विश्रुतप्रताप, प्रबलरिपुमदज्वार विध्वंसकारी।
कीर्त्या चन्द्रानुशौर्या, सकलजनमन करवानन्दकारी॥
कुर्वन् च भिन्नधर्मान्पि सहजसमान दीनकान् राष्ट्रधर्मे,
विष्वग व्याप्तप्रकाश, प्रखरकरदल राजते भारतोऽयम्॥

इति नेहरूयश सौरभे दशम सर्ग।

---

# नेहरू-यशः-सौरभम्

## एकादशः सर्गः

१

स विश्वबन्धुर्भुवनैकचन्द्र,
संतापहारी जनमानसानाम् ।
प्रबुद्धचेता सुपथ - प्रणेता
बभूव नेता प्रतिभागुणानाम् ॥

२

स राजनीति-प्रतिभा-प्रबुद्ध,
प्रशासने दक्षतमो धरण्याम् ।
राष्ट्रव्रते जीवनमादधान,
क्रमेण वृद्धत्वमुपाजगाम ॥

३

निरन्तरं मानवधर्मसिद्धेः
प्रध्यानमासाद्य जरार्दितोऽपि ।
लोकस्य कल्याण-परम्परणा-
मसौ विधानेऽभिरतो बभूव ॥

४

धान्तेन देहेन वहन् वदान्यः,
प्रशासनं भारतमातृभूमेः ।
स लोकनिर्माणरतो वरण्यां,
श्रियं दधौ विश्वपितामहस्य ॥

५

स लोकभारेण विनम्रभावः,
क्षीणोऽपि देहेन महानुभावः ।
सन्न्यायदण्डं स्व करे दधानो,
धर्मं विना सत्यपथे जगाम ॥

६

जरा प्रभावेण यथा यथास्य,
क्षीणोपजाता कृतिनो दृशः श्रीः ।
तथा तथा जीवनदर्शनेऽसौ,
महानुभावोऽजनि दूरदर्शी ॥

७

यदा यदा लोकमसौ ददर्श,
कश्चिज्जनैः स्वार्थवशाद्विपन्नम् ।
तदा वचोभिः प्रतिभासमृद्धै-
श्चकार चैतन्यममात्यवर्गम् ॥

८

वचांसि वै लोकहिते रतस्यो-
पदेशवद् मन्त्रिगणा वरेण्याः ।
निपीय सिन्धो जलदा इवाम्भः,
कालादपूरन् जनमानसानि ॥

९

जरादितस्य प्रतिभाबलेन,
राष्ट्रं विकासोन्मुखमानिनीषोः ।
निरन्तरं श्रान्त-शरीर-यष्टिः,
शनैः शनैः क्षीणदशां प्रपेदे ॥

१०

महासभायां भुवनेश्वरेऽसौ
यदा क्षणं क्लान्तमना बभूव ।
तदा समस्तव्यवसायशून्यो
राष्ट्रो भयस्तब्ध इवाभितस्थौ ॥

११

रुग् विद्युदाघातसमप्रभावा,
तथा शरीरं शिथिलीचकार।
यथा शिखा जीवन दीपकस्य,
प्रयत्न-गुप्तापि विकम्पिताभूत् ॥

१२

कारुण्यसिन्धो र्भुवि दीनबन्धोः
सदा शरण्यस्य निपीडितानाम्।
शान्तिप्रतीकं निजघान तस्य,
कालः करालो हृदयं विशालम् ॥

१३

स्वातन्त्र्यसंग्रामसमर्पितस्य,
कठोर चक्राद् दमनस्य यस्य।
नासीद् भय भाग्यविपर्ययेऽस्तो
दुःखैः प्रयत्ने नं सुरक्षितोऽभूत् ॥

१४

मन्त्रिप्रवर्य पविपात-कल्पं
साश्रु स्वरेण व्यथयाभितप्तम्।
संसूचितं ससदि पुण्यकीर्ते-
महाप्रयाणं ह्यविनश्वरस्य ॥

१५

विस्फोटवद् वृत्तमसह्यमेतत्
प्रकम्पयामास धरामघोराम् ।
जनार्णवः क्षोभमुपेत्य येन
सीमानमुल्लङ्घयितुं प्रवेने ॥

१६

तदक्षयं शुभ्र-यशोऽभिराम,
दिगन्तराले विकिरन् मनस्वी ।
कलेवरं नश्वरदेहबन्ध
विहाय, दिव्यं जगृहेऽमरत्वम् ॥

१७

दासो विलुण्ठन् धरणीमधन्यो
भाति स्म मन्ये परिवेपमानः ।
निष्कासितो देहगृहादकस्मात्
कृतापराधो जननायकेन ॥

१८

मन्ये स्मरन् विश्वजनोपकार-
क्रियां समाधातुमनयजालम् ।
विचार गम्भीर गुहाप्रविष्ट,
स मीलिताक्षः सहसाऽधिरेजे ॥

१९

दिशा अभूवन् मलिना समन्ताद,
धूलिर्धरायां नभसो ववर्ष ।
दिवंगते ज्योतिषि मानवानां,
मनांसि जातानि तमोवृतानि ॥

२०

उद्यानपुष्पाणि सुगन्धितानि,
प्रफुल्लकञ्जानि सरोगतानि ।
अज्ञानतानीव सर्मापितानि,
दुःखानल-बलान्त-कदर्थितानि ॥

२१

स्नेहाभिषिक्तानि जनेश्वरस्य
सदा प्रफुल्लानि, हृदि स्थितानि ।
पुष्पाणि मन्ये मलिनीकृतानि
वियोग - दोषाग्निनु पाटलानि ॥

२२

शान्ति-प्रतीकान् बहुधा कपोतान्
योऽमुञ्चदुल्लासपरोऽन्तरिक्षम् ।
दिधाय ते चक्रमणं समन्ताद्,
दिवंगतं तं परिमार्गयन्ति ॥

२३

उद्वेलयन्ती यमुना स्वबन्धोः,
क्रूर क्रियां वीक्ष्य विनाशबुद्धेः ।
भृशावरोदीदनुतप्यमाना,
तरङ्गशीर्षं परिपीडयन्ती ॥

२४

संध्या कृशाङ्गी मलिनाम्बरेण,
निगूढ - गात्रा परितप्यमाना ।
विमुच्य ताराश्रु - जलं पपात,
शोकेन साधोः परिमूर्च्छितेव ॥

२५

विलप्यमाना, प्रियदर्शिनी सा
पितुः शरीरं विकलाऽऽलिलिङ्ग ।
समाप्त - प्राणप्रहरे प्रभेव
सूर्यं समन्तान्मलिनोदयश्रीः ॥

२६

व्यथातुरान्दोलितमानसानां,
हा हा रवं राकुल मानवानाम् ।
समस्तलोक - व्यवसाय - शून्या,
रुरोद शोकादिव राजधानी ॥

२७

प्रापन्नशोकस्तु समस्तलोको,
व्याप्त - व्यथासिन्धुमगाधपारन् ।
प्रहारमज्ञात-मते यमस्य,
विमूढवद् दैवहतो ददर्श ॥

२८

'कालो बलीयानिति' मन्यमाना,
लोका महापौरुष-दर्शिनोऽस्य ।
यशःशरीरस्य चरित्रमार्यं,
जगुः समन्ताद्विनश्वरस्य ॥

२९

अद्यानता दिक्षु विकम्पमाना,
राष्ट्रध्वजा विश्वगता इवासन् ।
संकेतशब्दं दिवि सूचयन्तः
शोकं धरित्रीजनमानसानाम् ॥

३०

इत्येवमिष्टि यजो जननायकाय,
श्रद्धाहुति शोकनिमग्नभावा ।
विभिन्न - देशस्य महानुभावा,
दिवंगताय प्रददु जनाय ॥

३१

यदा चितायां महनीयकीर्ते
देहो बभूवानलसात् तदानीम् ।
असंख्य - चक्षु:स्रवदम्बुधारा-
पातोऽपि तं शामयितुं न शेके ॥

३२

तज्ज्योतिरस्य स्वशरीरयन्त्रं,
निष्पाद्य लीनं परमात्मतत्त्वे ।
यशःशशाङ्को जनमानसानि,
प्रकाशयत्यन्यतमोवृतानि ॥

३३

आतङ्कवादेन यदा परात्मा-
अधर्म - वृत्ति मनुआचरन्ति ।
सीदन्ति सन्तः प्रहसन्ति मन्दाः,
खला बलेन प्रभुतां हरन्ति ॥

३४

साधून् परित्रातुमनन्त शक्ति-
विभिन्न - रूपेण तदावतीर्य ।
प्रदर्शयन् सत्पथ जनानां
करोति धर्मस्य नयप्रतिष्ठाम् ॥

३५

लोके भोगप्रियतनुमिमां प्राप्य मोहस्वरूपा-
मप्यात्मानं विषम-विषयान् मोचयन्त प्रकामम् ।
धन्यास्ते ये विमलयशसा स्वाद निर्माय नौका
मापल्लोलल्लहरमतरन्नुग्रसंसारसिन्धुम् ॥

इति नेहरूयश:सौरभे एकादश: सर्गः ।

---

# नेहरू-यशः-सौरभम्

## द्वादशः सर्गः

१

याते दिव नरवरे भुवनावतंसे,
लोकप्रिये सुजन-मानस-राजहंसे ।
सौजन्यचन्द्रकिरणैः प्रतिभासमाना,
पुत्री गुणैरनुचकार पितु कृतित्वम् ॥

२

बाल्ये पितुर्मनसि या प्रियदर्शनत्वा-
दासीत् प्रमोदपदवी "प्रियदर्शिनीति" ।
"नाम्नोन्दिरा" भुवनमङ्गलमादधाना-
साभूद् विभूतिरिव भारतभाग्यलक्ष्मी ॥

३

युद्धे जितं ननु समुद्धत पाकदेशं,
सन्धातुमेत्य सुजनैः सह "ताशकन्दे" ।
दैवादवाप निधनं हृदयावरोधात्,
कीर्तिं किरन् जगति 'लालबहादुरो'ऽपि ॥

४

अल्पावधौ कृतचमत्कृतिरेव वीरो,
युद्धेऽवचित्य निजराष्ट्रहसे प्रतिष्ठाम् ।
दुर्दैव - दर्शितपथेन यदा प्रयातो,
निक्षिप्य शोक-दहने गहने स्वदेशम् ॥

५

राष्ट्रं विलोक्य परितः सहसाऽसहायं,
तामिन्दिरां सपदि लोकसभा-सदस्याः ।
चक्रुश्चरित्रगुण-भूषण-भूषिताङ्गीं
मन्त्रि-प्रधान - पदवी - परिमण्डिता ते ॥

६

सा लोकमङ्गलमथ स्वपद-प्रतिष्ठा-
मातन्वती जगति भारत-भाग्य-लक्ष्मीः ।
सम्यग् विकासगतिमग्यवतीं विधातुं,
राष्ट्र - प्रशासन - पथं सुदृढीचकार ॥

७

व्यापार-कोषमधिकृत्य समर्पयन्त्याः,
सामान्य-जीवन हिताय जनाय तस्याः ।
क्रान्ति-प्रसार-परिकल्पित-मानसाया
लोकप्रशंसितमभूत् प्रथमाभियानम् ॥

८

कृत्येन लोक-हित-चिन्तन-चर्चितेन,
तेन प्रतिष्ठित-विधान-समर्थितेन ।
कर्षापणा प्रवहति स्म समस्तदेशे,
सामान्यजीवनकृते सुलभा भवन्ती ॥

९

देशीय-राज्य-विलय-प्रतिपादनेऽपि,
गृह्णन् विशेष-सुविधां नरपालवर्गः ।
आसीत् स्वतन्त्र-जनतन्त्र-जनाधिकारे
देशे समत्व-नय-सिद्धि-विधौ कलङ्कः ॥

१०

तं समान व्यवहारनीत्या,
कर्तुं समाजेऽप्यधिकार - साम्यम् ।
विशेष - लाभप्रद - संविधाना-
धिकारमार्गं व्यपनेतुमैच्छत् ॥

११

विधेयकस्तत्र यदा विशेषा-
धिकारमुन्मीलयितुं नृपाणाम् ।
विवेक - सम्पन्न - नयं प्रदातुं,
महासभायामसमर्थितोऽभूत् ॥

१२

देशे प्रजातन्त्र-विधौ जनाना-
मास्तां तदाऽऽप्तुमिव स्वनीतौ ।
बभञ्ज सद्यः प्रथित - प्रभावा,
निर्वाचनार्थं जन-संसदं सा ॥

१३

जनाधिकार - प्रतिपन्न - नीतिं,
स्वीकृत्य लोको मतदानतत्परया ।
निवर्तयामास महासभायां,
प्रशासनार्थं दलमिन्दिरायाः ॥

१४

निर्वाचिता लोकमतेन भूयः
प्रधानमन्त्रित्वपदं दधाना ।
समापयत् सा विधिना विशेषान्
तदाधिकारान् ननु भूपतीनाम् ॥

१५

अवाप्य सर्वत्र विवेकशोभितां
नव प्रतिष्ठां भुवनाभिनन्दिता
ददर्श देशे प्रकृतिं सुनिष्ठुरां
विकासमार्गे परितोऽवरोधिनीम् ॥

१६

जलं सयत्नं बहुशो विवर्धितं
कृषिर्विनष्टा परितोऽप्यवर्षणे ।
क्वचिज्जलप्लावनदारुणीकृतं,
बभार लोको दयनीयजीवनम् ॥

१७

समेधमाना जनवृद्धिराक्षसी,
विकासमेवोदरसादकुर्वत ।
निरन्तरोत्पादनसाधनाविधा-
बलःफलक्या प्रगतिस्तिरोहिता ॥

१८

प्रभावतु सम्प्रसितामपि प्रजा
मवाप्य केचिद् धनलाभलुब्धका ।
विभिन्नवस्तु - व्यवसायतस्करा
जना अभूवन् व्यवहारवञ्चका ॥

१९

अनर्थमेते तु तथार्थ-हेतवे
स्वधुर्ययाऽभावविपन्नमानवैः ।
अभोज्यसत्वान्युपभुज्य भोजने-
ष्वभावि तैर्जीवनमोघमल्पयाम् ॥

२०

यदौषधं जीवनदानदीक्षितं
बिभर्ति लोकं, विषमे विपद्गतम् ।
तदेव हस्तेगतमुग्रकर्मणां
बभूव हालाहलवन्महाविषम् ॥

२१

तथा हि राष्ट्रस्य चरित्रपद्धति-
र्विनिर्मिता पूर्वजनैः समुज्ज्वला ।
शिखेव दीपस्य चिरप्रकाशिता,
विकम्पमानेव बभूव धूमला ॥

२२

स एष देशो बहुशो यदङ्गणे,
चरित्र-शिक्षाधिगतान्यदेशजैः ।
बलाद्य लोभेन वशीकृता हि तां
समुद्यता हन्तुमिहास्य सन्ततिः ॥

२३

कठोरदण्डक्रियया परिष्कृतां
विधाय सा शासनमुन्नताशया ।
अशोधयत् सभ्यसमाजकण्टकान्
विभिन्नलोकव्यवसायतस्करान् ॥

२४

निपन्निरस्तैर्जीवन-भोग-वस्तुभि-
र्व्यवस्थया लोकहितानुबन्धया ।
विपत्तिवाताज्जनजीव - दीपक -
प्रभां प्रयेते ननु साऽभिरक्षितम् ॥

२५

यथा कुटीरोद्यम दत्त-मानसा,
जना बभूवुर्व्यवसाय-दर्शिनः ।
तथैव, सम्यक् कृषि-कर्म-तत्पराः,
कृषीवलाः सेचन-साधनादिभिः ॥

२६

धनानि सम्यग् व्यवसाय-कोषतः,
प्रदाय लोकाय विकास वर्त्मनि ।
स्थितं स्वदेशं पुनरग्रगामिनं,
व्यधादसौ कर्मनिबद्धमानसा ॥

२७

यथैव केन्द्रे निज मन्त्रि-मण्डलं,
चकार कर्मण्यमसौ प्रशासने ।
तथैव राज्य-स्तर मुख्यमन्त्रिणोऽ
व्यवशायत् कर्म-पथ निरालसम् ॥

२८

यदा स्वदेश महदथ संकटा-
द्विय समुदतुं मभूत समुद्यता ।
विपक्षमन्तशृं ह युद्ध वह्निना,
तदाऽज्वलज्जजर-पाक-शासनम् ॥

२९

बहुत्र शक्ति प्रतिभा-समृद्धान्
सधर्मिण स्वांगिन-बङ्गजातान् ।
प्रशासका पश्चिम-पाकभागाद्,
हीनानमन्यन्त जनानुदारान् ॥

३०

पूर्वं समाहूय, समन्वयार्थं,
बङ्ग प्रजाया दयित मुजीवम् ।
पश्चादमुं बन्दिगृह प्रहित्य
पाकेश्वरो लोकमत जघान ॥

३१

बङ्ग-प्रजाऽस्तः सहसा विरुद्धा,
प्रशासनं पश्चिम पाकजानाम् ।
उत्पीडनं शोषणमुद्धतानां,
समूलमुन्मूलयितुं प्रयेते ॥

३२

पिशाचवृत्या दमन-क्रियाभिः,
सेना तदा सैनिकशासकानाम् ।
कृत्यानि वै क्रूरतमानि चक्रे,
निरीह-रक्तेन कलङ्कितानि ॥

३३

आबालवृद्धान् पशुवन्निहत्य,
नारीजनान् सैनिकवास-भूमौ ।
सामूहिकैस्ते व्यभिचार कृत्यैः,
जघ्नुः कलङ्कैः स्व-पद-प्रतिष्ठाम् ॥

३४

आराधना-देवगृह-प्रदाहो,
विद्या-कला-संस्कृति-सर्वनाशः ।
प्रबुद्ध-लोक-प्रतिभा-विनाशो,
दुष्कृत्यमासीद् भुवनेऽद्वितीयम् ॥

३५

दीना जना मृत्युभयादसह्या,
सर्वस्व-दाहं परिवीक्षमाणा. ।
सीमानमुल्लङ्घ्य शरण्यदेशं,
प्रपेदिरे भारतवर्षमार्ताः ॥

३६

स्वदेशगेहात् प्रसभं निरस्ता.
सधर्मिभिः क्रूरतमं स्वार्थैः ।
पात प्रिया-पुत्र-वियोग - तप्ताः,
प्रापुर्जना जीवनमात्र - शेषाः ॥

३७

स्वलाक-निर्वाह-कृते कथञ्चित्,
कृत-प्रयासा शरणागतानाम् ।
समुद्रमालोक्य विवर्धमानं,
भीतिं न भेजे प्रियदर्शिनी सा ॥

३८

संसाधनैः संयतवस्तुभोगैः,
स्नेहैश्च सा जीवन-दीपकानाम् ।
शिखामुदारां परिवेपमानां,
ररक्ष सम्यक् शरणागतानाम् ॥

३९

प्रहित्य-सन्देश-हरानसूचयत्
समस्त-देशान् समयेन मानिनी ।
विनाशमुग्रं ननु पाकसंनिकं,
स्वदेश-भारं शरणागतंश्च सा ॥

४०

पुनः पुनश्चेतनया मनस्विनी,
प्रबोधयन्ती किल पाकशासकम् ।
चकार यत्नं नरमेध-शान्तये,
समृद्धये राष्ट्र - हिताभिवृद्धये ॥

४१

विवेक-वाक्यैर्जल-सन्निभैस्तया
विनाशवह्नि-र्बहुशोऽपि शामितः ।
दहन् स्वदेशाङ्गमहो निरन्तरं,
समूल-नाशं सहसोपचक्रमे ॥

४२

दिवानिशं जाति-विहिंसन-क्रिया,
विलोक्य बङ्गप्रतिभा-विखण्डनम् ।
नराधमान् निर्दय-पाक-शासकान्,
बलेन रोद्धुं बलिनो मनो दधुः ॥

४३

स्वय समानान्तर- शासनेन ते,
समूलमुन्मूलयितुं नराधमान ।
स्व देशमुद्धर्तुं मुपेत साहसा,
जना अकार्षुं जनमुक्तिवाहिनीम् ॥

४४

निरायुधा, हीन-समग्र-साधना,
निरन्तरोद्दीपित-मुक्ति-भावना ।
पदे पदे शत्रुमुपेत्य साहसात्,
प्रधर्षयन्तो बलिनो विचक्रमु ॥

४५

स वङ्गलोकादवश पराजितो,
विधाय पाक. कपट-प्रतिक्रियाम् ।
अकारण भारत-भूतल बलात्,
समाक्रमद् वायुबलेन बालिश ॥

४६

ज्वलदग्नि-शिखेव दु महा,
सहसा पाकबलाज्य दीपिता ।
स्फुरदुन्नत - तेजसार्चिता,
प्रतिभाति स्म रुपेन्दिरा तदा ॥

४७

महिषासुर-मर्दिनीव सा,
रणचण्डी रिपु-दर्प-दारिणी ।
अथ भारत-वीर-वाहिनी-
मरिमाक्रन्तुमसौ समादिशत् ॥

४८

सरसा रिपु-सैन्यमुद्धतं,
जल-वायु-स्थल-सैनिकास्तदा ।
घन - वज्र - निपात - सन्निभं,
प्रहरन्तो विजय वितेनिरे ॥

४९

अथ पश्चिम-पाक्मेदिनीं,
स्थल-युद्धेन विजित्य सैनिका, ।
रण - गर्वमखर्वितं रिपो,
र्व्यदधन् धूमलमुग्र - विक्रमाः ॥

५०

सह बङ्ग-धरा-सुतैरिमे,
युधि शत्रुं परिपात्य गर्वितम् ।
ननु दानव-पाश-मोचनात्,
नव-राष्ट्रोदय - हेतवोऽभवन् ॥

५१

मद-गर्व-समुद्धत क्रियां,
सह लक्षाधिक सैनिकैः रिपोः ।
प्रकरोदपि बन्दिनीमसौ,
जनतानन्दकरीन्दिरा भृशम् ॥

५२

विजयेन रणे, न केवलं,
बंगला-देश नवोदयोऽभवत् ।
अभवत् परित प्रतिष्ठितं,
भुवने भारत वर्य - विक्रमम् ॥

५३

पाञ्चाल-पुत्रीमिव बंग भूमिं,
दुःशासनादाशु विधाय मुक्ताम् ।
सा बङ्ग बन्धो विजयेन शान्तिं,
द्वीपे पुनः स्थापयितुं प्रयेते ॥

५४

सीमानमाक्रम्य बलात् प्रविष्टा,
स्ववाहिनीं युद्धमुखान्निवर्त्य ।
मुमोच शत्रो र्वंसमाहरन्तो,
मत्सग्रह पाक - धराधिपस्य ॥

५५

स्वाधीन-राष्ट्रे नव - 'बंगदेशे',
प्रहित्य भूयः शरणागतान् सा ।
अलोक - सामान्य - यशोऽभिरामा,
रेजे वदान्या, जनवन्दनीया ॥

५६

सा लब्धकल्पं रिपु सैन्यमाजौ,
बन्दीकृतं वीक्ष्य दयार्द्रभावा ।
सहोदरस्नेहतया जुहाव
पाकेश्वर सन्धि-कृते सवानीम् ॥

५७

मध्ये महीधरवने हिमशीकरार्द्रे,
सन्धि विधाय सदया शिमला नगर्याम् ।
सन्ताप-शान्तिमकरोदनु पाकभूमे,
कौतूहल-प्रशमन च धराधिपानाम् ॥

५८

शान्तिप्रभापरिगता भुवि लोकशान्त्यै,
सन्धिं विधाय सह पाकजनेश्वरेण ।
कीर्ति शशाङ्कधवलामधिगत्य लोके,
युद्धे कृतां क्षतिमिवाशु हि सा पुपूरे ॥

५९

स-धौ त्रिपक्ष परिकल्पित-कार्यवृत्तौ,
सा वंगदेश-हित-साधन-सिद्धकामा ।
बन्दीकृता समर-सीमनि पाकसेनां,
१,र्णाश्रुभिः सह मुमोच तदङ्गनानाम् ॥

६०

पूर्वं समुद्धतमरिन्दमदण्डनोत्था,
सशोधनं पुनरुदारधियः क्षमाया-
ऽत्र विधाय, भुवने महिमानमार्या,
साऽस्थापयत् नभसि सूर्यमिव प्रदीप्तम् ॥

६१

प्रातः प्रबुद्धा जनतैकदासौ,
शुश्राव विस्फोटमभूतपूर्वम् ।
येनारिचित्तेन सहैव राज-
स्थाने धराया हृदयं चकम्पे ॥

६२

आश्चर्यमेतत् किमिदं धरायां,
यावज्जना ज्ञातुमुपाक्रमन्त ।
तावन्नभोवाग् जनिताणुशक्ति-
मघोषयद् भारतमुद्यताभम् ॥

६३

विस्फोटशक्त्या त्वरितोपजातो,
रेजे धरायां नव-गण्ड-शैलः ।
वज्राभिघात - भ्रम - भीरुकोऽन्त-
र्हित. प्रयातो बहिरद्रि - सूनु ॥

६४

राष्ट्रप्रतिष्ठागगने महास्त्र-
विस्फोट-सूर्ये समुदीयमाने ।
सुहृत्-सरोजानि विकासमापु-
र्म्लानौ तथाऽमित्र-कुमुद्वतां श्रीः ॥

६५

यथा प्रतिज्ञातमणु-प्रसङ्गे,
पित्रा, तथा शान्ति-कृते सुपुत्री ।
व्यस्फोटयद् सा परमाणुमस्त्रं
शिवाय, शान्त्यै, जनता-हिताय ॥

६६

सम्बोधयन्ती निजराष्ट्रमार्या,
सुस्पष्ट-शब्दं भ्रमभीरुकाणाम् ।
चकर्त भीतिं परमाणु-शस्त्र-
स्फोटोपजातां भुवि शासकानाम् ॥

६७

अतीव भीत ननु पाक शासक,
विलोक्य रक्षाकुलमाणवास्तत ।
पुन पुन घोषणया मनस्विनो,
चकार सावधसमघोर - मानसम् ॥

६८

नरप्रतिष्ठामणुशक्तिसाधना-
मवाप्य विश्वे बहुशोऽभिनन्दिता ।
अभूद् विनम्रा फलितश् लतेव सा,
क्षमा गुणे चान्वकरोद् वसुन्धराम् ॥

६९

श्रद्धामयी सुजनमानसराजहंसी
सा राजनीति-गगने ध्रुवतारिकेव ।
आकाश दीपक-शिखा भव सागरेऽस्मिन्,
लोकान् निवेदयति दिग्-भ्रमितान् निराशान् ॥

७०

इत्थ दिक्षु यशः प्रसार्य भुवने, राष्ट्र-प्रतिष्ठा पुन-
रूर्ध्वं सदधती, जनेषु करुणामातन्वती मानसे ।
दक्षा कर्मणि लोकमङ्गल विधौ, सद्धर्मनीतिप्रभा,
शक्ति च प्रतिभामिव विजयते, विश्वक् किरन्तीन्दिरा ॥

७१

विधूय लोकस्य विपत्तमांसि या,
विकासयत्युच्च-विधान-चन्द्रिकाम् ।
विवर्धयन्ती कविमानसाम्बुधिं,
विभाति सा शान्ति विधोर्विभेन्दिरा ॥

७२

राकाचन्द्रस्य चारुत्व.
या दधाति चमत्कृतिम् ।
कान्ता राष्ट्रकथा सेयं,
प्रियं प्रीणाति कस्य न ? ॥
(चक्रारबन्ध)

७३

शुभ्रा यज्जनुषां गुणा भुवितले गङ्गातरङ्गायते,
कीर्तिस्नाहविगङ्गनाङ्गलसिता दिव्याङ्गरागायते ।
त्यागः शाश्वत लोकमानस रसोद्गारी पयोदायते,
धन्य तत्कुलमार्य-भूमि-रसिको, यस्मिन् जनो जायते ।

७४

श्रद्धा-स्नेह रसेन यत् सुकृतिनां प्रीणाति सन्मानस,
यस्मिन् राष्ट्रसुधाकरप्रणयिनो जाताश्चकोरा जनाः ।
दिग्-व्याप्त धवलीकरोति भुवन यस्यावदात यश,
काव्ये तन्नेहरू कुलस्य चरितं चित्रीकृत पावनम् ॥

७५

इन्द्रो वर्षतु मेघमण्डललसच्चापप्रतापद्युति,
द्रागुत्साहभरप्रफुल्लहृदयका: कर्षन्तु विश्वम्भराम् ।
उप्ता बीजकणा: फलन्तु, मुजना जीवन्तु सत्यव्रता,
भूयाच्छस्यभरप्रसूतिरनिशं कान्ताकृतिः श्रेयसे ॥

७६

गोविन्दस्य च पित्रो, र्ध्यात्वा पादान् मया महादेव्याः ।
"नेहरू-यश सौरभं" रचितं वाच समभ्यर्च्य ॥

इति नेहरूयश सौरभे द्वादश सर्गः ।

---

# कवि-परिचयः

१

प्रज्ञावतामर्जितगौरवाणां
गोस्वामिनां वंशधरे वरेण्य ।
अभूद्धिवाराधनसिद्धकाम,
शैमाग्रगण्यो बलदेवनामा ॥

२

तीर्थे सतामर्चितपादपीठे
ग्रामे सकाहेति वसन मनस्वी ।
लेभे चतुर्वर्गफलस्वल्पान,
वशप्रदीपांश्चतुरात्मजान स ॥

३

ज्यायानसौ तेषु धिया वरीयान,
गोविन्दनाम्ना यशसा महीयान् ।
भिषग्वरो य स्वगुणैरुदारैं
जने - जनेऽभूद् बहुमानपात्रम ॥

४

पुरारिमाराधयतोऽस्य गेहे,
भार्या सती देवगणप्रसादात् ।
असूत सूनुद्वयरत्नमार्या,
काले फलं सत्कृतिवत् कवीनाम् ॥

५

सोऽयं तयोर्ज्येष्ठतरः कवीना
पादानुगामी बलभद्रनामा ।
गुरोः प्रसादाद् गिरमुद्गिरन्तीं,
श्लोकं समाबध्य कवित्वमाप ॥

६

गीर्वाणवाणीं स्वकुलानुरूपा-
मधीत्य विद्यामपि दास्यवृत्तिम्
स्वीकृत्य खण्डस्य विकाससेवा-
धिकारिणः कृत्यमसौ करोति ॥



# ❋ शुद्धि-पत्रम् ❋

| पृष्ठम् | पंक्ति | शुद्धम् |
|---|---|---|
| ५ | १४ | मास्खण्डल |
| ८ | १५ | माक्रान्त |
| १२ | २ | बंभूव |
| १३ | ८ | पर्वणि |
| १८ | १० | द्दवजे |
| २७ | ९ | प्रसंगे |
| ३२ | ५ | प्रवाहेण |
| ३६ | ४ | प्रयागम |
| ५१ | ६ | जवाहर |
| ७० | ९ | स |
| ७४ | ३ | घमंत |
| ७७ | १४ | समागता |
| ७९ | २ | सप्तम सर्ग |
| ८० | ११ | सम्पदापद्दमि |
| ९१ | ९ | सार्पे राष्ट्रद्विपा |
| ९३ | १२ | चण्डिकेवापमानिता |
| ९४ | ८ | सहस्राण |
| ९५ | ८ | जीवानुदरे |
| ९६ | ३ | विलीन- |
| ९६ | १६ | मुक्तिप्रसंगो |
| ११५ | १६ | चकार |
| ११६ | ११ | धारयन् |
| ११६ | १६ | बहुव्रीहियुत |
| १२० | ९ | भूधराणा- |
| १२५ | १५ | जलदस्यु |
| १४४ | ८ | रक्षितुम् |
| १४७ | ७ | पति |
| | ७ | वश |

११५०/A

मुद्रणाशुद्धय क्षुद्रा, यत्र सञ्जागता भूयम् ।
क्षमी कं रं या समाधेया, विस्तरान्नात्र दीयते ॥